मिथिलाविद्यापीठग्रन्थमाला
प्राचीनाचार्यग्रन्थावलौ त्रयोदशपुष्पम्

# लक्षणमाला

श्रीमदुदयनाचार्यकृता

स्वकृतव्याख्यया सनाथीकृत्य

विद्यावाचस्पतिना श्रीशशिनाथझाशर्मणा
मिथिलाविद्यापीठस्थेन सम्पादिता

मिथिलासंस्कृतविद्यापीठप्रधानेन प्रकाशिता

मूल्यं ३ रूप्यकाः

मिथिलाविद्यापीठग्रन्थमाला
प्राचीनाचार्यग्रन्थावली
त्रयोदशपुष्पम्

श्रीमदुदयनाचार्यकृता

# लक्षणमाला

स्वकृतव्याख्यया सनाथीकृत्य
विद्यावाचस्पतिना
**श्रीशशिनाथझाशर्मणा**
मिथिलाविद्यापीठस्थेन
सम्पादिता

**मिथिलाविद्यापीठप्रधानेन प्रकाशिता**

शकाब्दा १८८४ विक्रमाब्दाः २०१९ ऐसवीयाब्दाः १९६३

Copies of this Volume, postage paid can be had of the Director, Mithila Institute, Darbhanga on payment of Rs. ~~2.90~~ 3.00 by M.O. or Postal Order or Cash.



Text Printed by Sri Surya Narayan Jha for Abhinava Vidyapati Press Laheriasarai. Introductions, Preliminary pages and Cover printed by Sri Binda Prasad for Darbhang Press Company (Private) Limited and Published by Dr. Sitansusekhar Bagchi, Director, Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning, Darbhanga.

MITHILA INSTITUTE SERIES

*Ancient texts Series No. 13*

# LAKṢAṆAMĀLĀ

OF

## UDAYANĀCĀRYA

EDITED BY

VIDYAVACASPATI

**SRI SASINATHA JHA**

*Traditional Pandit, Mithila Institute*

DARBHANGA

THE INSTITUTE

DARBHANGA

1963



The Government of Bihar established the Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object, *inter-alia*, to promote advanced studies and research in Sanskrit Learning, to bring together the traditional Pandits with their profound learning and the modern scholars with their technique of Research and investigations and to publish works of permanent value to scholars. This Institute is one of the six Scholarly bodies started by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, five others—The Nalanda Institute of Post-Graduate Studies and Research in Pali and Buddhist Learning at Nalanda, the K. P. Jayaswal Research Institute at Patna, the Bihar Rashtrabhasa Parishad for advanced Studies and Research in Hindi at Patna, the Vaishali Institute of Post-Graduate Studies and Research in Jainism and Prakrit Learning at Vaishali and the Institute of Post-Graduate Studies and Research in Arabic and Persian Learning at Patna—have been established to give incentive to research and advancement of knowledge. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.

As part of this programme of rehabilitating and re-orientation of ancient learning and scholarship, the editing and publication of this volume has been undertaken with co-operation of scholars. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of Scholarship and learning would bear fruit in the fullness of time.

## ।। लक्षणमालाभूमिका ।।

वयमिह पदविद्यां तर्कमान्वीक्षिकीं चेत्यादिपद्येन सर्वदर्शनपाण्डित्यं स्वयमेव प्रकटितं श्रीमतोदयनाचार्येण। किरणावलीबौद्धाधिकारकुसुमाञ्जलिप्रभृतिग्रन्थनिकरेण तन्निर्मितेन विदुषां न्यायादिदर्शनाभिज्ञता समुल्लसिता। वैशेषिकद्रव्यादिषट्पदार्थानां नव्यनीत्या लक्षणप्रकाशिका लक्षणावली तन्निर्मितैवेत्यत्र न केषामपि पण्डितानां विप्रतिपत्तिः। बालानामुपकृतये वैशेषिकदर्शने यथा लक्षणावली, तथा न्यायदर्शनेऽपि प्रमाणादिषोडशपदार्थलक्षणावगतये लक्षणमाला प्राचीनोक्तिप्रणाल्या तन्निर्मितैव भवितुमर्हति। अक्षपादरचितसूत्रसन्दर्भेण प्रमाणादिपदार्थोद्देशलक्षणपरीक्षाणामवगतिर्भाष्यवार्त्तिकतात्पर्यसमन्वयतो धीधनानां भवत्येव। किन्तु ततो झटिति बालानां संक्षेपतोऽवबोधो दुर्लभ इत्यतो लक्षणमालाप्रणयनं सार्थकमेव। लक्षणवाक्ये लक्ष्यवचनं यदस्ति तदुद्देशस्वरूपमपीति नोद्देशस्य पृथगावश्यकता। परीक्षा तु लक्षणतोऽवधृते लक्ष्ये मन्दमतीनामपि मतिपाटवे जाते प्राचीनोक्त्यवबोधतः सुगमेति। यद्यपि मानाधीना मेयसिद्धिर्मेयसिद्धिस्तु लक्षणादिति वचनप्रामाण्यात् प्रमाणलक्षणमेवादर्तव्यम्, ततोऽवधृतान् प्रामाण्यात् प्रमेयसिद्धिः स्यादेवेति नातिप्रयोजनकं प्रमेयलक्षणप्रणयनम्, तथापि प्रमेयस्वरूपानवधृतौ तद्घटितं प्रमाणलक्षणमेव न सुखावबोधमिति प्रमेयस्यैकस्यान्यप्रमेयभेदावगतये व्यवहृतये च प्रमेयलक्षणप्रणयनमप्यावश्यकमेव। स्वरूपतटस्थभेदेन द्विविधं लक्षणम्। यथा पृथिव्या गन्धसमवायिकारणतावच्छेदकं यत् पृथिवीत्वं तद्वत्त्वं स्वरूपलक्षणम्। गन्धवत्त्वं गन्धसमवायिकारणत्वमित्यादिकं तटस्थलक्षणम्। अनयोश्च लक्षणयोर्यथास्थानं शिष्याणामवगतये सन्निवेशो युज्यत एव। लक्षणस्यापि लक्ष्यतावच्छेदकसमनियतधर्मत्वं लक्षणलक्षणजिज्ञासायां लक्षणं वक्तव्यमेव। सर्वस्य प्रपञ्चस्य ब्रह्मव्यतिरिक्तस्य न पारमार्थिकं सत्त्वम्, नापि क्वचिदप्युपाधावप्रतीयमानत्वलक्षणं खरशृङ्गादिवदसत्त्वम्, किन्त्वनिर्वचनीयत्वमित्यनिर्वचनीयतावादव्यवस्थापकेन श्रीहर्षेण लक्षणाधीना लक्ष्यव्यवस्थितिर्लक्षणानि चानुपपन्नानीति प्रतिज्ञाय प्रथमतः तत्त्वानुभूतिः प्रमेति प्रमालक्षणस्य खण्डनमारब्धम्।

निरुक्तावभिमानं ये दधते तार्किकादयः।
हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ।।

इति पञ्चदशीवचनात् प्रमाणादिनिरुक्त्यभिमानिनामन्येषामपि विदुषां प्रमाणलक्षणादिकं श्रीहर्षेण खण्डितमेव। किन्तु उदयनाचार्यकृतप्रमाणादिलक्षणमेव तत्प्रतिमल्लतया तेन खण्डयितुमुपस्थापितमित्यहं सम्भावयामि। तदेतल्लक्षणं लक्षणमालायां दृश्यत इति लक्षणमाला उदयनाचार्यकृता। प्राचीनाया व्याख्यान्तररहिताया व्याख्यानमावश्यकमिति तद्व्याख्यानं मया रचितम्। उदयनाचार्यकृतैवेयमिति कल्याणभाजनप्राध्यापकश्रीमद् अनन्तलालठक्कुरेण लक्षणमालाकर्तृत्वविमर्शेऽत्रैव प्रदर्शितमवधारणीयमितिहासाभिज्ञैरित्युपरम्यते। तं च अपेक्षितसाहाय्यं कृतवन्तं स्नेहभाजनं श्रीमन्तं किशोरनाथझाशर्माणं च आशीर्भिः संवर्धयामि।

[१]मद्रासप्रान्तीयप्राच्यविद्यानुशीलनपत्रिकातोऽस्माभिर्लक्षणमालाया मूलं संगृहीतम्। तत्पुनर्मुद्रणायानुमतिं दत्तवते तत्पत्रिकासम्पादकाय विद्वद्वराय विद्वद्बान्धवाय डा० श्री वे० राघवनमहोदयाय हार्दिकीं कृतवेदितां विज्ञापयामि। इति शिवम्।

निवेदको विद्यावाचस्पतिर्झोपाह्वः
शशिनाथशर्मा-
मिथिलाविद्यापीठस्थः॥

---

१ Journal of Oriental Research, Madras, Vol. XIX pp. 44-52.

# लक्षणमालाकर्तृत्वविमर्शः

वरदराजीये तार्किकरक्षासारसंग्रहे तट्टीकायां मल्लिनाथकृतायां निष्कण्टकायाम्, अभयतिलकोपाध्यायविरचिते न्यायालङ्कारे च दृश्यत उदयनाचार्यग्रथिताया लक्षणमालायाः समुल्लेखः। समुद्धृतानि लक्षणमालागतलक्षणानि न्यायशास्त्रसंबद्धानीति सा न्यायशास्त्रीयप्रमाणादिषोडशपदार्थलक्षणप्रदर्शनपरेत्यनुमीयते। न्यायवैशेषिकसम्प्रदाये उदयनस्य स्थानमभ्यर्हिततममिति कृत्वा तस्य कृतेरस्या लक्षणमालाया प्रचाराभावो न शक्यो व्याख्यातुम्। नास्या व्याख्या काचित् विदुषां श्रवणगोचरा वर्तते। न वैतस्याः बाहुल्येन खण्डनं मण्डनं वा अर्वाक्तनदर्शनग्रन्थेष्ववलोक्यते। मातृकापि काचन ग्रन्थकारनामधेयमसन्दिग्धमुद्वहन्ती परिचिता नासीद् विपश्चिताम्।

अनन्तशयनप्राच्यमातृकाशालागतां ग्रन्थकारनामोल्लेखरहितां मातृकामेकामालम्ब्य श्रीमता सुब्रह्मण्यशास्त्रिमहोदयेन [1]मद्रासप्रान्तीयप्राच्यविद्यानुशीलनपत्रिकायां (एकोनविंशतितमे भागे) काचन लक्षणमाला संशोध्य प्रकाशिता। अत्र न्यायशास्त्रगतानां षोडशपदार्थानां लक्षणानि समागच्छन्ति। प्रमेयप्रकरणे पुनर्वैशेषिकपदार्था अपि लक्षितानि। शिवादित्यमिश्रकृता[2] काचन लक्षणमाला इतस्ततः समुद्धृतेति, अत्रत्यं प्रमालक्षणं खण्डनखण्डखाद्यटीकायां[3] शङ्करमिश्रेण न्यायाचार्यनाम्ना निर्दिष्टेति च कृत्वा विद्वद्वरेण सम्पादकमहाभागेन शिवादित्यमिश्रस्यैवेयं कृतिरिति स्थिरीकृतम्। किं तु शिवादित्यकृतेर्लक्षणमालातो गृहीतं किमपि लक्षणं तेन प्रस्तुते ग्रन्थे न लक्षितम्। अतोऽत्र ग्रन्थकारनिर्णयविधौ सन्देहो जागरूक एवास्ते।

स्वर्गतेन प्राध्यापकदिनेशचन्द्रभट्टाचार्यमहोदयेन प्रस्तुता लक्षणमाला शिवादित्यकृतितया न स्वीकृता। अपि तु न्यायाचार्योदयनकृतैवैषेति तस्य सिद्धान्तः। एतदर्थं तेन संक्षेपतः कानिचन प्रमाणानि समुपन्यस्तानि। तथा हि—

---

1. Journal of Oriental Research, Madras, XIX, pp. 44-52.
2. Cf. *Nayanaprasādinī*, NSP, p 108 & Introduction to the *Mahāvidyāviḍambana*–Telang, pp. XVIII-XIX.
3. *Śāṅkarī*, p. 143

(क) तुष्टेर्मोचयतो बन्धादतुष्टेर्बध्नतः पुनः।
कारागारमिदं विश्वं यस्य नौमि तमीश्वरम् ॥

इत्येष श्लोकः प्रस्तुते ग्रन्थे [1]गुणकिरणावलीप्रारम्भे च समानतयोपलभ्यते।

(ख) निरुपाधिकसाध्यसम्बन्धशालि लिङ्गमिति लक्षणमालायाम् (ता.र. सारसंग्रहे पृः १७६) इति, असिद्धः साध्यसमः (तत्रैव, पृः २२५) इति च लक्षणद्वयमत्र लक्षणमालायां यथावद् वर्तते। उभयत्र[1] च निष्कण्टकायां मल्लिनाथो लक्षणयुगलमुदयनाचार्यस्यैवेति दर्शयामास।

(ग) प्रस्तुतलक्षणमालास्थं प्रथममेव तत्त्वानुभूतिः प्रमेति लक्षणं खण्डनखण्डखाद्ये समुद्धृत्य श्रीहर्षेण खण्डितम्। शङ्करमिश्रोऽप्येतन् न्यायाचार्यकृतं लक्षणं मनुते[2]। शिवादित्यस्तु शङ्करमिश्रकाले न न्यायाचार्यपदभागासीत्।

सुदृढान्यप्येतानि प्रमाणानि न शङ्कापिशाचीवितारणायालमभूवन्नित्यस्माभिः प्रत्यक्षीकृतम्। अतोऽत्रास्माकं पुनः प्रयत्नः।

उदयनशिवादित्ययोर्लक्षणमाले आस्ताम्। समुद्धृतलक्षणानुसारेण उदयनकृतिर्न्यायशास्त्रसंबद्धा, शिवादित्यकृतिश्च वैशेषिकशास्त्रमुखिनीति संभाव्यते। प्रस्तुता च लक्षणमाला न्यायपदार्थलक्षणप्रदर्शनपरेति कर्तृत्वमस्योदयनमेवापाततोऽनुधावति। अत्र पुनर्वैशेषिकपदार्थलक्षणान्यपि सन्तीति बाधा समागच्छति। शिवादित्यकृता सप्तपदार्थी वैशेषिकपदार्थलक्षणप्रदर्शनपरा। तत्कृतलक्षणग्रन्थान्तराभावे सप्तपदार्थीगतानि लक्षणानि प्रस्तुतग्रन्थधृतैर्लक्षणैस्तुलनामर्हन्ति। सप्तपदार्थीगतलक्षणेषु बाहुल्येन जात्युल्लेखपूर्वकत्वं विशेषः। प्रस्तुतलक्षणमालायां तु नैकत्रापि जातिरुल्लिखिता। प्रागुक्तग्रन्थगतलक्षणानि न तथा सरलानि यथा प्रस्तुते ग्रन्थे। केवलं कियत्सु लक्षणेषु साम्यमुभयोः, शब्दगतमैक्यं तु ततोऽपि न्यूनेष्वेव स्थलेषु। तथा हि—

(१) [सामान्यम् स°प° पृः ६२] नित्यमनेकसमवेतम् [°वायि सामान्यम्। ल°मा° पृः ४८]।

---

१। [1] तत्र...उदयनसंमतिमाह—निरुपाधिकेति—निष्क° पृः १७६ तथा आद्यभेदत्रये तावदुदयनलक्षणमालां संवादयति—यथाहुरिति। तत्रैव पृः २२५।

२। न्यायाचार्यकृतलक्षणमालाग्रन्थे प्राथमिकं प्रमालक्षणं...तत्त्वानुभूतिरिति, *Śankari*, p. 144.

(२) नित्यसंबन्धः [°त्यप्राप्तिः ल° मा° पृः ४८] समवायः स° प° पृः ६४।

(३) गन्धवती पृथिवी [ल° मा° पृः ४८, स° प° पृः ६६]।

(४) [तेजस्त्वजातियोगि स° प° पृः ६८] उष्णस्पर्शवत् [औष्ण्यवत् ल° मा° पृः ४८] तेजः।

(५) [वायुत्वजातियोगी स° प° पृः ६९] अरूपस्पर्शवान् वायुः [ल° मा° पृः ४८]।

(६) शब्दगुणम् [°णः ल° मा° पृः ४८] आकाशम् [°शः ल° मा°, स° प° पृः ७०]।

(७) [रूपत्वजातिमत् स° प° पृः ७५] चक्षुर्ग्राह्यो गुणो [°ह्य एवार्थो ल° मा° पृः ४८] रूपम्।

(८) [रसत्वजातियोगी स° प° पृः ७६] रसनाग्राह्यो गुणो [रसनग्राह्य एवार्थो ल° मा° पृः ४८] रसः।

(९) [गन्धत्वजातियोगी स° प° पृः ७७] घ्राणग्राह्यो गुणो [°ग्राह्य एवार्थो ल° मा° पृः ४८] गन्धः।

(१०) [स्पर्शत्वजातियोगी स° प° पृः ७८] स्पर्शनमात्रग्राह्यो गुणः [°नग्राह्योऽर्थः ल° मा° पृः ४८] स्पर्शः।

(११) [गुरुत्वजातिमदेकवृत्त्याद्य° स° प° पृः ९२]पतनासमवायिकारणं गुरुत्वम्। [ल° मा° पृः ४९]।

(१२) [द्रवत्वजातिमदेकवृत्ति स° प° पृः ९३]स्यन्दनासमवायिकारणं द्रवत्वम् [ल° मा° पृः ४९]।

(१३) [शब्दत्वसामान्ययोगी स° प° पृः ९८] श्रोत्रग्राह्यगुणः शब्दः। [ल° मा° पृः ४९]।

[१४] तत्त्वानुभवः [°नुभूतिः ल° मा° पृः ४६] प्रमा [स° प° पृः १२२]।

[१५] [व्याप्तिप्रदर्शनपुरःसरं सम्यग्° ल° मा° पृः ५०]दृष्टान्तवचनमुदाहरणम् [स° प° पृः १३३]।

(१६) [व्याप्याङ्गीकारे ल° मा° पृः ५०] अनिष्टव्यापकप्रसञ्जनं तर्कः। [स° प° पृः १३६]।

शिवादित्यकृतस्य प्रणाशं गतस्य लक्षणग्रन्थस्य समुपलभ्यमानानि लक्षणानि न संवदन्ते लक्षणमालया प्रस्तुतया इति सम्पादकमहाभागेनापि लक्षीकृतम्। समुद्धृतान्युदाहरणानि न प्रकल्पन्ते प्रयोजनपूरणाय। प्रस्तुतलक्षणमाला चेदुदयनकृतिरूपेण स्वीक्रियेत, तथापि तदनुवर्तिना शिवादित्येन स्वरूपतो वा अंशतः संस्कृत्य वा तल्लक्षणानि स्वग्रन्थे स्वीकर्तुं शक्यते। तत्रापि शङ्कान्तरं समुदेति—प्रस्तुता लक्षण-

माला यदि उदयनकृता तर्हि कथमत्र लक्षणावलीतः शैलीवैषम्यम् ? अत्रोत्तरवादिनां समाधानम्—प्रथमे वयसि आचार्येण लक्षणमाला ग्रथिता, चरमे च लक्षणावलीति संभाव्यते। असम्पूर्णा किरणावली वार्धके वैशेषिकानुरागमाचार्यस्य द्योतयति। लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति प्रवादः उदयनकाले लब्धप्रसर आसीत्। न्याय-वैशेषिकशास्त्रयोः समानदृष्ट्या आचार्येण गृहीतयोरेकत्रैव लक्षणग्रन्थो विनिर्मित इत्यत्रापि न प्रतिभाति कारणविशेषः। विषयभेदेऽपि लक्षणमालालक्षणावल्यो-र्लक्षणेषु साम्यमसकृद् आविष्कृतमस्माभिः। तदप्येतस्मिन् प्रकरणे विचारपदवी-मधिरोहति। तथा हि,

(१) शरीरसंयुक्तं साक्षात्कारिप्रमा [अपरोक्षप्रतीति° ल° पृः २९] साधन-मतीन्द्रियमिन्द्रियम्। [ल° मा° पृः ४७]।

(२) अर्थप्रकाशो बुद्धिः। [ल° मा° पृः ४८; ल° पृः ४९]।

(३) उत्साहः प्रयत्नः। [ल° मा° पृः ४९; ल° पृः ६०]।

(४) [आद्य-ल° पृः ६०]पतनासमवायिकारणं गुरुत्वम्। [ल° मा° पृः ४६]।

(५) [आद्य-ल° पृः ६०]स्यन्दनासमवायिकारणं द्रवत्वम्। [ल° मा° पृः ४६]

(६) [श्रुत्यादि-ल° मा° पृः ४९]विहितक्रिया[°तानुष्ठान-ल° मा°]-साध्यः पुं-[पुरुष-ल° मा°]गुणो धर्मः। [ल° पृः ६३]।

(७) [श्रुत्यादि-ल° मा° पृः ४९]निषिद्धक्रिया[°द्धानुष्ठान-ल° मा°]-साध्यः पुं[पुरुष-ल° मा°]गुणोऽधर्मः। [ल° पृः ६४]।

(८) श्रोत्रग्राह्योऽर्थः [°ह्यो गुणो ल° पृः ६४] शब्दः। [ल° मा° पृः ६४]।

अत्र तावदिदमवधेयम्। प्रोद्धृतेषु लक्षणेषु विषयगतमैक्यं सर्वत्रोपलक्ष्यते। शब्दसौकर्यं पुनर्लक्षणावलौ। तत्त लक्षणमालायाः प्राग्भवत्वं द्योतयति। विषयगत-मैक्यं पुनर्ग्रन्थयोरेककर्तृकत्वे, अन्यतरस्य उभयोर्वा प्राचीनग्रन्थविशेषात् लक्षण-स्वीकारे वा संभवति। उदयनात् प्राचीनो लक्षणग्रन्थकारः कश्चन आसीदिति न परिज्ञायते। अत उभयोर्लक्षणग्रन्थयोरेककर्तृकत्वपक्ष एव बलवान् इत्यनुमीयते।

उदयनकृतीनां गभीरं परिज्ञानमासीद् वरदराजस्य इति तद्ग्रन्थपर्या-लोचनातः स्फुटीभवति। तार्किकरक्षासारसंग्रहावसाने

आलोड्य दुस्तरगभीरतरान् प्रबन्धान्
वाचस्पतेरुदयनस्य तथा परेषाम्।

सारो मयात्र समगृह्यत ॥

इत्यत्र तेन स्वाधमर्ण्यं प्रतिपादितम्। न्यायकुसुमाञ्जलिबोधनीनिर्माणहेतुरपि तेन तथैव प्रकटीकृतः —

औदयने पथि गहने विदेशिकः प्रतिपदं स्खलति लोकः।
तस्य कृते कृतिरेषा इत्यत्र।

सारसंग्रहे वरदराजेन उदयनस्य सर्वे प्रसिद्धा ग्रन्थाः समुद्धृताः। तथा हि—

(१) आचार्यास्तु यदुत्तरं परकीयसाधनस्येव स्वस्यापि व्याघातकं भवति, सा जातिरुत्तरस्यापि व्याघातकत्वेन स्वपरसाधनसाम्यं समशब्दप्रवृत्तिनिमित्त-माहुः। [सा. सं. पृः २५०] अत्र जात्युत्तरं परसाधनमिव स्वात्मानमपि व्याप्नोति इत्यतः स्वपरसाम्यात् सममित्युच्यते इति प्रबोधसिद्धि-[कलि॰ सं॰ ग्रन्थमाला, पृः ६]-ग्रन्थपरामर्शः।

(२) यथोक्तमाचार्यैः कथायामखण्डिताहङ्कारेण परस्याहङ्कारखण्डनमिह पराजयो निग्रहः। [सा॰ सं॰ पृः ३१९] एषोऽपि ग्रन्थः प्रबोधसिद्धितो [पृः ७८] गृहीत इत्यवगन्तव्यम्।

(३) अतएव मितिः सम्यक्परिच्छित्तिरित्यादिः [सा. सं., पृः १२] न्यायकुसु-माञ्जलितः [४.५] संगृहीतः। एतद्व्याख्यानमुखेन निष्कण्टकायां मल्लिनाथेन 'उदयनाचार्यवचनं संवादित्वेनावतारयति' इति ग्रन्थकारपरिचयः सन्निविष्टः। [निष्क॰ पृः १२]।

(४) यथाहुः अनियम्यस्य नायुरित्यादिः [सा॰ सं॰ पृः १०१]। अयमपि सन्दर्भः न्यायकुसुमाञ्जलौ वर्तते [३.१९]। अत्रापि उदयनसम्मतिमाहेति निष्कण्टकायां [पृः १०१] मल्लिनाथपातनिका।

(५) यथाहुः व्यक्तेरभेदस्तुल्यत्वमित्यादिः [सा. सं. पृः १३१]। द्रः अत्रौदयन-सम्मतिमाह व्यक्तेरिति [निष्क॰ पृः १३१]। अयं श्लोकः किरणावलौ [पृः १६१] समायाति।

(६) यथाहुः तर्कमधिकृत्य तात्पर्यपरिशुद्धिकाराः तस्य च स्वरूपमनिष्टप्रसङ्गः। [द्रः परिशुद्धिः १.१४०, सा. सं. पृः १८६]। तुल॰ अथ स्वोक्तं तर्कलक्षणमुदयनोक्त-तर्कलक्षणेन संवादयति-यथाहुरिति। [निष्क॰ पृः १८६]।

(७) अन्वयव्यतिरेकविषये भूयोदर्शनसाहाय्यकमाचरन्ननुग्राहकस्तर्क इत्यात्मतत्त्वविवेकश्च। [आत्म°, कलि° पृः ८६३, सा° सं° पृः २०३]। द्रः उदयनोक्तमानानुग्राहकत्वमप्युपलक्षणं मत्त्वाह-अन्वयव्यतिरेकेति। [निष्क° पृः २०३]।

(८) यथाहुः भावनैव प्रयत्नात्मा सर्वाख्यातस्य गोचरः। [न्या. कु. ५. १०, सा. सं. पृः १४६]। तुल° अत्राचार्यसम्मतिमाह-यथाहुरिति। [निष्क° पृः १४६]।

प्रोद्धृतसन्दर्भसमूहपर्यालोचनात आचार्यशब्देन उदयन एवाभिप्रेत इति निश्चप्रचं ज्ञायते।

अथेदानीं प्रस्तुतलक्षणमालया तार्किकरक्षाकारिका, सारसंग्रहो निष्कण्टका च तुलनीया, यथा वरदराजस्य मल्लिनाथस्य चैतत्परिज्ञानं सुप्रतिपादितं स्यात्। सारसंग्रहे प्रस्तुतलक्षणमालातो द्वेधा सन्दर्भोद्धारो दृष्टचरः। अस्माभिः पुनः व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनं तर्क इति लक्षणमालायामिति तृतीयो लक्षणमालासन्दर्भस्तत्र लक्षीकृतः। [सा° सं° पृः १६१] इदं तु तर्कलक्षणं प्रस्तुतलक्षणमालायाम् [पृः ५०] अक्षुण्णं लभ्यते। सारसंग्रहे कतिचिन्न्यायशास्त्रीयलक्षणानि आचार्यनिर्मितानि समुद्धृतानि। तथा हि—(१) लिङ्गपरामर्शोऽनुमानमित्याचार्याः सा° सं° पृः ६५ तुल° तर्कभाषा, पृः ३६। (२) परीक्षासाध्यमर्थावधारणं निर्णयः। सा° सं° पृः २०५। (३) विजिगीषमाणयोरपि साधनोपालम्भवती कथा जल्प इत्याचार्याः। सा° सं° पृः २१३; तुल° तर्कभाषा, पृः ८४। (४) अकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञाप्रत्यक्षमुपमानमित्याचार्याः। सा° सं° पृः ८६। (५) परतन्त्रोक्तः स्वतन्त्रे चानिषिद्धोऽर्थोऽभ्युपगमसिद्धान्त इत्याचार्याः। सा° सं° पृः १७४। (६) साध्यविपर्ययव्याप्तो हेतुर्विरुद्ध इत्याचार्याः। सा° सं° पृः २२०; तुल° तर्कभाषा, पृः ६०। (७) सत्प्रतिपक्षो हेतुः प्रकरणसम इत्याचार्याः सा° सं° पृः २२१। तुल° तर्कभाषाप्रकाशिका, पृः १५७। (८) एकद्रव्याः स्वरूपसन्तो विशेषा इत्याचार्याः। सा° सं°, पृः १५६। एतानि सर्वाणि लक्षणानि प्रस्तुतलक्षणमालायां यथावदुपलभ्यन्ते।

तार्किकरक्षाकारिकास्वपि प्रस्तुतग्रन्थगतानि लक्षणानि बहुशोऽनूदितानि दृश्यन्ते। इतस्ततः स्वल्पो भेदस्तु छन्दोऽनुरोधेन स्वीकृत इति संभाव्यते। तथा सारसंग्रहेऽपि कानिचिदनामग्राहं गृहीतानि। तेषां तु लक्षणमालासंवादः सार्वत्रिकः। अत्रोदाहरणानि यथा—

(१) यथार्थानुभवः प्रमा। ता° र° पृः ६, तर्कभाषा, पृ. २८ तुल° तत्त्वानुभूतिः प्रमा। ल° मा° पृः ४६।

(२) अपरोक्षप्रमाव्याप्तं प्रत्यक्षम्। ता° र° १.१०। तुल° साक्षात्कारिणी प्रमा प्रत्यक्षम्। साक्षात्कारिणी च प्रमा सैवोच्यते या इन्द्रियजा। तर्कभाषा, पृः ३२; इन्द्रियजप्रमासाधकतमं प्रत्यक्षम्। ल° मा° पृः ४६।

(३) अव्युत्पन्नपदोपेतवाक्यार्थस्य च संज्ञिनि।
प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते॥ ता° र° १-२१-२

तुल° अकृतसमयसंज्ञास्मरणसहायमित्यादि प्रागुक्तम्। [ल° मा° पृः ४६]।

(४) तत्प्रतीतिः फलं चास्य। ता° र° १.२३; फलं च तत्संबन्धप्रतीतिः। सा° सं° पृः ८६। तुल° अस्य फलं सम्बन्धपरिच्छित्तिः। ल° मा° पृः ४७ तथा संबन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह।....उपमानफलं विदुः॥ न्या° कु° ३.१०।

(५) अन्त्यावयविचेष्टाश्रय इत्येकं लक्षणम्। अत्र चेष्टा नाम प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया। ततश्चादृष्टवदात्मसंयोगासमवायिकारणकक्रियाश्रयाणां दहनपवनादीनां निरासः।........अन्त्यावयवीति करचरणादिव्युदासः। सा° सं° पृः १२१। तुल° प्रयत्नवदात्मसमवायिकारणक्रियाश्रयः शरीरनिरपेक्षोऽन्त्यावयवि शरीरम्। प्रयत्नवदात्मेति, अदृष्टवदात्मसंयोगासमवायिकारणक्रियासाधारण्यात् दहनपवनादीनां निरासः। अन्त्यावयवीति करचरणादीनाम्। ल° मा° पृः ४७।

(६) शरीरयोगे सत्येव साक्षात्प्रमितिसाधनम्। इन्द्रियम्॥ ता° र° १२८ तुल° शरीरसंयुक्तं साक्षात्कारिप्रमासाधनमतीन्द्रियमिन्द्रियम्। ल° मा° पृः ४७ तथा तर्कभाषा, पृः ५४।

(७) बुद्धिरर्थप्रकाशनम। ता° र° १.२६; अर्थप्रकाशो बुद्धिरित्युक्तम्। सा° सं° पृः १२५ तुल° अर्थप्रकाशो बुद्धिः। ल° मा° पृः ४८ तथा तर्कभाषा पृः ७४।

(८) सुखादेरपरोक्षस्य साधनं मन इन्द्रियम्। ता° र° १.२९ तुल° सर्वात्मविशेषगुणसाधनं मनः। ल° मा° पृः ४८।

(९) ननु निःश्रेयसोपयोगीनि द्रव्यादीनि प्रमेयान्तराणि सन्ति, तानि कुतः सूत्रकारैर्न लक्षितानि--तत्राह,

मोक्षे साक्षादनङ्गत्वादक्षपादैर्न लक्षितम् ।

तन्त्रान्तरानुसारेण षट्कं द्रव्यादि लक्ष्यते ॥ ता° र° १.३३

तुल° यद्यपि प्रमेयान्तरमस्ति तथाप्येतावदेवोक्तम्, अपवर्गोपयोगात् ।........पदार्थः । स च षोढा, समानतन्त्रपरिसंख्यानात् । ल. मा. पृः ४८ ।

(१०) गुणानामाश्रयो द्रव्यं कारणं समवायि वा । ता° र° १.३५ ।

गुणाश्रयो द्रव्यमित्येकं लक्षणम् । समवायिकारणमित्यपरम् । सा° सं° पृः १३२ ।

तुल° गुणवद् द्रव्यम्....समवायिकारणमित्यपि द्रव्यलक्षणम् । ल° मा° पृः ४८, तथा तत्रासमवायिकारणं द्रव्यम्, गुणाश्रयो वा । तर्कभाषा, पृः ६० ।

(११) (अ) तत्र गन्धवती भूमिः (आ) आपः सांसिद्धिकद्रवाः ॥३६

(इ) उष्णस्पर्शगुणं तेजः (ई) नीरूपस्पर्शवान् मरुत् ।

(उ) नभः शब्दगुणं (ऊ) कालश्चिरादिव्यवहारकृत् ॥३७

(ऋ) दिशा पूर्वादिधीहेतुः शेषं प्रागेव लक्षितम् ॥ ३८ ता° र°

तुल° (अ) गन्धवती पृथिवी । (आ) स्वभावतो द्रवा आपः ॥

(इ) औष्णवत् तेजः । (ई) अरूपस्पर्शवान् वायुः ।

(उ) शब्दगुण आकाशः । (ऊ) परापरव्यतिकरानुमेयः कालः ।

(ऋ) पूर्वापरादिव्यवहारासाधारणकारणका दिक्

आत्ममनसोस्तु लक्षणमुक्तमेव ॥ ल° मा° पृः ४८

(१२) (क) संयोगस्तु विरोधी स्याद् गुणत्वे सति कर्मणः ।

(ख) यस्मात् संयोगविध्वंसो विभागः स गुणो भवेत् ॥४३

(ग-घ) परापरधियोर्हेतू दिक्कालापेक्षयैव यौ ।

परत्वमपरत्वं च क्रमादेतौ गुणौ स्मृतौ ॥४४

(ङ) आह्लादः सुखम् ।

(च) इच्छानुरागो (छ) द्वेषः स्यादसहिष्णुत्वलक्षणम् ॥४५

(ज) प्रयत्नस्त्वात्मधर्मः स्यादुत्साहो भावना च सः ।

(झ) गुरुत्वं तु गुणो हेतुराद्ये पतनकर्मणि ॥४६

(ञ) द्रवत्वं तु गुणो हेतुराद्ये स्यन्दनकर्मणि ।

(ट) स्निग्धधीर्यद्विशिष्टेऽर्थे स्नेहश्चिक्कणता च सः ॥४७

(ठ) यज्जातीयसमुत्पाद्यस्तज्जातीयस्य कारणम् ।
स्वयं यस्तद्विजातीयः संस्कारः स गुणो मतः ॥४८

(ड) विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः ।

(ढ) प्रतिषिद्धक्रिया साध्यः पुंगुणोऽधर्म उच्यते ॥४९ ता° र° ॥

तुल° (क) कर्मविरोधी गुणः संयोगः । (ख) संयोगविरोधी गुणो विभागः । (ग-घ) यद्विशिष्टे द्रव्ये परमपरमिति व्यवहारस्ते परत्वापरत्वे । (ङ) आह्लादः सुखम् । (च) अनुराग इच्छा । (छ) असहिष्णुता द्वेषः । (ज) उत्साहः प्रयत्नः । (झ) पतनासमवायिकारणं गुरुत्वम् । (ञ) स्यन्दनासमवायिकारणं द्रवत्वम् । (ट) यद्विशिष्टे द्रव्ये स्निग्धमिति व्यवहारः स स्नेहः । (ठ) यद्द्वितीयावस्थासमवेत उत्पन्नः, तस्य तादवस्थ्यापादको गुणः संस्कारः । (ड) श्रुत्यादिविहितानुष्ठानसाध्यः पुंगुणो धर्मः । (सारसंग्रहेऽप्येवम् पृः १४८) (ढ) श्रुत्यादिप्रतिषिद्धानुष्ठानसाध्यः पुंगुणोऽधर्मः (सारसंग्रहेऽप्येवम् पृः १४८) । ल°मा° पृः ४८-९ ।

(१३) सामान्यं नित्यमेकं स्यादनेकसमवायि च । ता°र° १.५२ ।

तुल° नित्यमेकमनेकसमवायि सामान्यम् । ल°मा° पृः ४८ ।

(१४) व्याप्तिसंवेदनस्थानं दृष्टान्त इति गीयते ।
स च साधर्म्यवैधर्म्यभेदेन द्विविधो भवेत् ॥ ता°र° १.५६-७ ।

तुल° व्याप्तिग्रहणविषयो दृष्टान्तः । स द्विविधः, साधर्म्यवैधर्म्याभ्याम् । ल°मा° पृः ४९ ।

(१५) अभ्युपेतः प्रमाणैः स्यादाभिमानिकसिद्धिभिः ।
सिद्धान्तः सर्वतन्त्रादिभेदात् सोऽपि चतुर्विधः ॥ ता°र° १.५७-८ ।

तुल° प्रामाणिकोऽयमिति कृत्वा अभ्युपगतोऽर्थः सिद्धान्तः । स चतुर्विधः परिसंख्यानात् । ल°मा° पृः ४९ तथा तर्कभाषा, पृः ८२ ।

(१६) लिङ्गस्य वचनं हेतुः साधकत्वप्रकाशकम् । ता° र° १.६६ ।

तुल° साधनत्वाभिव्यञ्जकविभक्त्यन्तं लिङ्गवचनं हेतुः । ल°मा° पृः ४९-५० तथा सा° सं° पृः १७७ ।

(१७) व्याप्तिनिर्देशपूर्वकं सम्यग्दृष्टान्तवचनमुदाहरणम् । सा° सं° पृः १८० ।
तुल° व्याप्तिप्रदर्शनपुरःसरं सम्यग्दृष्टान्तवचनमुदाहरणम् । ल° मा° पृः ५० ।

(१८) उदाहरणोपदर्शिताविनाभावस्य हेतोर्धर्मिण्युपसंहार उपनयः । सा° सं° पृः १८१ तुल° धर्मिणि [पक्षे-तर्कभाषा, पृः ८३] लिङ्गोपसंहार उपनयः । ल° मा° पृः ५० ।

(१९) व्याप्तिपक्षधर्मतावद्धेतुपुरःसरं धर्मिणि साध्यस्योपसंहारो निगमनम् । सा° सं° पृः १८२ । तुल° [पक्षे-तर्कभाषा, पृः ८३] साध्यस्योपसंहारो निगमनम् । सा° सं° पृः १८२ ।

(२०) विचारविषयो नानावक्तृको वाक्यविस्तरः कथा । ता° र° १.७६ ।
तुल° साध्यव्यवस्थितये व्याहृतनानावक्तृकवाक्यसंदृब्धिः कथा । ल° मा° पृः ५० ।

(२१) प्रामाणिकवचनमात्राभिप्रायपूर्विका कथा वादः । सा° सं° पृः २१०
तुल° प्रामाणिकेत्यादि । ल° मा° पृः ५० ।

(२२) सति सपक्षे पक्षमात्रवृत्तिरसाधारणः । सा° सं° पृः २२० ।
तुल° पक्षमात्रवृत्तिः विद्यमानसपक्षस्तु असाधारणः । ल° मा° पृः ५० ।

(२३) यथाहुः वाच्यान्तरकल्पना यत्र तद् वाक्छलम् । सा° सं° पृः २४१
तुल° वाक्यान्तरकल्पना यत्र तद् वाक्छलम् । ल° मा° पृः ५०

समुद्धृतेभ्य उदाहरणेभ्यो वरदराजो लक्षणमालां प्रस्तुतां जानाति स्मेति स्पष्टमाभाति । अत्र मल्लिनाथस्य साक्ष्यमपि मनसि विधारणीयम् । केशवमिश्रेणाप्य-र्वाक्तनेन कानिचिल्लक्षणानि स्वग्रन्थे समाहृतानीति लक्षीकृतमस्माभिः । लक्षणमालया तत्र तत्र साम्यदर्शनात्, तादृशप्राचीनग्रन्थान्तरे तत्तल्लक्षणानुपालम्भाच्च एतयैवास्य संबन्धोऽनुमीयते । केशवमिश्रवरदराजयोः प्रथमो मैथिलः, चरमश्च काश्मीर-जन्मा[1] । एकवाक्यतापि तयोरुभयोरादर्शैक्य एव सम्भवति । उदयननामाङ्कितानां लक्षणानां प्रस्तुतलक्षणमालायां पूर्णतयोपलम्भात्, वरदराजकेशवमिश्रयोश्च तत्परिचयदर्शनात् इयमेवोदयनाचार्यकृता लक्षणमालेति वक्तुं सुकरं भवति ।

---

१ वरदराजभट्टेन काश्मीरनिवासिना विरचिते तार्किकरक्षाग्रन्थे······ ।
—Des. Cat. Sans. Mss, ASB, Vol. XI. p. 112.

उदयनमतखण्डनायैव श्रीहर्षेण खण्डनखण्डखाद्यं विरचितमिति ऐतिहासिकानां परामर्शः। स तु तयोः कृत्योः परीक्षणादपि दृढीभवति। खण्डनखण्डखाद्ये पुनः तत्त्वानुभूतिः प्रमेति लिङ्गपरामर्शोऽनुमानमिति लक्षणद्वयं समुद्धृत्य खण्डितम्। तयोराद्यं न्यायाचार्यीयमिति शङ्करमिश्रः। उभे च लक्षणे प्रस्तुतलक्षणमालायां यथावद् दृश्येते इत्यपि अत्र विचारणीयम्। उदयनलक्षणमालातः समुद्धृतमेकं तर्कलक्षणमस्माभिरुदाहृतम्। तच्च प्रस्तुतलक्षणमालया समानमित्यपि दृष्टम्। अभयतिलकोपाध्यायेन पुनरन्यल्लक्षणं लक्षणमालात[1] एव संगृहीतम्। न च तत् प्रस्तुतलक्षणमालायां दृश्यते। एकस्मिन्नेव ग्रन्थे वैकल्पिकलक्षणनिर्माणं नागोचरं विशेषविदाम्। मातृकायामनुपलम्भस्तु लेखकानवधानादपि संभाव्यत इति शम्।

भारद्वाजस्य श्रीमतोऽनन्तलालठक्कुरस्य
मिथिलाविद्यापीठस्थस्य।

---

१. उदयनकृतलक्षणमालायाम् आहार्यलिङ्गारोप इति पाठः। पञ्चप्रस्थानन्यायटीका Quoted in the Journal, Oriental Institute, Baroda Vol. VIII, p. 12.

## ससंकेताकरसूची

आत्मतत्त्वविवेकः (आत्म°)—कलिकाता ।

किरणावली—कलिकाता ।

तर्कभाषा—मुम्बई ।

तर्कभाषाप्रकाशिका—मुम्बई ।

तार्किकरक्षा (ता°र°)—वाराणसी ।

तार्किकरक्षासारसंग्रहः (सा°सं°)—वाराणसी ।

तार्किकरक्षासारसंग्रहनिष्कण्टका (निष्क°)—वाराणसी ।

न्यायकुसुमाञ्जलिः—वाराणसी ।

न्यायवार्तिकतात्पर्यपरिशुद्धिः (परिशुद्धिः) मातृकागता ।

प्रबोधसिद्धिः—कलिकाता ।

लक्षणमाला (ल°मा°) ।

लक्षणावली (ल°)—मिथिला ।

सप्तपदार्थी (स°प°)[1]—कलिकाता ।

History of Navya-Nyāya in Mithilā

—D. C. Bhattacharya.

---

१. एतद्गतपृष्ठ(पृः)संख्यास्थले लक्षणसंख्येति पाठ्यम् ॥

# लक्षणमाला

येषां गीरमिता महेशमनने बौद्धप्रथोन्मूलिनी
आवल्यन्तप्रतीतलक्षणकृतिर्वैशेषिकार्थेऽखिले ।
आचार्या बुधभूषणा उदयनेत्याख्याभृतस्तेऽन्यया
कृत्या लक्षणमालयाऽङ्घ्रिचरणे पूजां विदध्युर्वराम् ॥१॥

तस्याः स्थूलमतीष्टदां शिशुहितां व्याख्यां गुरूपासना-
मात्रार्थः शशिनाथ इष्टगिरिजानाथः करोत्यादरात् ।
मानं गौतमसूत्रमत्र विषये सर्वत्र मूलाश्रितं
नव्यानामपि लक्षणानुगमनं स्वल्पं क्वचिद्भावितम् ॥२॥

चिकीर्षितग्रन्थनिर्विघ्नपरिसमाप्तये कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—

**तुष्टेर्मोचयतो बन्धादतुष्टेर्बध्नतः पुनः ।**
**कारागारमिदं विश्वं यस्य नौमि तमीश्वरम् ॥**

तुष्टेरिति—ननु मङ्गलं ग्रन्थादौ नारम्भणीयं निष्फलत्वात् जलताडनवत् । न हि निष्फले कर्मणि प्रेक्षावान् प्रवर्त्तते । न च निष्फलत्वमसिद्धम्, मङ्गलं निष्फलं यावत्फलविशेषशून्यत्वात् जलताडनवदित्यनुमानतस्तत्सिद्धेः । विशेषविनिर्मुक्तं सामान्यं न भवति, यथा यत्र विशेषः तत्र सामान्यसद्भावोऽवश्यमेव भवति, तथा यत्र सामान्यं तत्र विशेषोऽपि कश्चित् स्यादेवेति विशेषाभावकूटस्य सामान्याभावव्याप्तत्वम् । न च यावत्फलविशेषशून्यत्वमेव मङ्गलस्यासिद्धमिति साम्प्रतम् । प्राचीनमते विघ्नध्वंसादि-द्वारा समाप्तिर्मङ्गलस्य फलम् । नवीनमते विघ्नध्वंस एव मङ्गलफलमिति विघ्नध्वंस-समाप्तिव्यतिरिक्तं मङ्गलफलं न कस्यापि सम्मतम् । विघ्नध्वंससमाप्त्योश्च मङ्गल-फलत्वाभावे यावत्फलविशेषशून्यत्वं मङ्गलस्य सिध्यत्येव । तथा हि नास्तिकग्रन्थे मङ्गलाभावेऽपि समाप्तिर्दृश्यत इति तदभावे तत्सत्त्वरूपव्यतिरेकव्यभिचारात् कादम्बर्यादौ मङ्गलसत्त्वेऽपि समाप्तेरभावात् तत्सत्त्वे तदभावरूपान्वयव्यभिचाराच्च मङ्गलान्वयव्यतिरेकयोः समाप्तिं प्रति मङ्गलस्य कारणत्वग्राहकयोरभावेन मङ्गलस्य

न समाप्तिं प्रति कारणत्वमिति न समाप्तिफलकत्वम्। स्वतः सिद्धविघ्नविरहवता कृतस्य मङ्गलस्य सद्भावेऽपि न विघ्नध्वंस इत्यन्वयव्यभिचारात् विघ्नध्वंसं प्रति मङ्गलस्य न कारणत्वमिति विघ्नध्वंसफलकत्वमपि न मङ्गलस्येत्येवं मङ्गलं यावत्फलविशेषशून्यं विघ्नध्वंससमाप्तिव्यतिरिक्तफलकत्वाभावे सति विघ्नध्वंससमाप्तिफलकत्वाभावात्, यन्नैवं तन्नैवं यथादर्शादीत्यनुमानेन यावत्फलविशेषाभावसिद्धेरिति चेत्—मैवम्; यतो निश्चिताभ्यामन्वयव्यतिरेकाभ्यां कार्यकारणभावनिश्चयो भवति तत्र स्वेतरसकलकारणसत्त्वे तत्सत्त्वे तत्सत्त्वमन्वयः, स्वेतरसकलकारणसत्त्वे तदभावे तदभावो व्यतिरेकः। स्वेतरसकलकारणसत्त्वे तत्सत्त्वे तदभावोऽन्वयव्यभिचारः, स्वेतरसकलकारणसत्त्वे तदभावे तत्सत्त्वं व्यतिरेकव्यभिचारः। कारणत्वमन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्त्तित्वम्। तत्र अन्वयव्यभिचारज्ञानं सत्यन्तस्य प्रतिबन्धकम्। व्यतिरेकव्यभिचारज्ञानं नियतपूर्ववर्त्तित्वज्ञानस्य प्रतिबन्धकम्। अन्वयव्यभिचारस्य व्यतिरेकव्यभिचारस्य वा सन्देहे कारणत्वस्य सन्देहो भवति। इति वस्तुस्थितौ यत्र मङ्गलं न दृश्यते समाप्तिस्तु दृश्यते, तत्र ग्रन्थाद्बहिरेव मङ्गलं कृतं स्यात्, जन्मान्तरे वा मङ्गलं कृतं भवेदित्येवं व्यतिरेकव्यभिचारस्य सन्देहः।

यत्र च मङ्गले सत्यपि समाप्तिर्न दृश्यते तत्र समसंख्यकविघ्नध्वंसं प्रति समसंख्यकस्य मङ्गलस्य कारणत्वमिति न्यूनसंख्यकमङ्गलात् कतिपयविघ्ननाशे जातेऽपि विघ्नान्तरस्य प्रतिबन्धकस्य सद्भावात् तदभावरूपकारणस्याभावादेव न समाप्तिरिति स्वेतरसकलकारणसत्त्वे तत्सत्त्वस्य सन्देहादन्वयव्यभिचारस्य सन्देह इत्येवं व्यतिरेकव्यभिचारसन्देहादन्वयव्यभिचारसन्देहाद्वा कारणत्वस्य सन्देह एव, न तु कारणत्वाभावनिश्चय इति मङ्गले निष्फलत्वं सन्दिग्धं न तु निश्चितम्। हेतोश्च निश्चयादेवानुमितिरिति न निष्फलत्वहेतुना सन्दिग्धेन मङ्गले ग्रन्थादौ अनारम्भणीयत्वस्यानुमानं सम्भवति। निष्फलत्वसन्देहश्च सफलत्वसन्देहपर्यवसन्नः सफलत्वसाधकानुमाने पक्षताविधया कारणम्। अतो मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वात् दर्शवदित्यनुमानं सफलत्वगमकं सम्भवति। अत्र सफलत्व बलवदनिष्टानुबन्धित्वे सति इष्टसाधनत्वम्। अविगीतत्वं बलवदनिष्टाननुबन्धित्वम्। शिष्टत्वं फलसाधनतांशे भ्रान्तिरहितत्वम्। क्रियायाः सविषयत्वाभावेन विषयपदसमभिव्याहृतस्याचारपदस्य कृतिरेवार्थः। तस्याश्च उद्देश्यत्वविधेयत्वसाधनत्वभेदेन त्रिविधा विषयतेति प्रकृते विधेयत्वाख्या विषयता विवक्षिता। श्येनयागे व्यभिचारवारणाय अविगीतत्वम्। चैत्यवन्दने व्यभिचारवारणाय शिष्टत्वम्। स्वर्गादौ व्यभिचार-

वारणाय विधेयत्वाख्यविषयत्वं च हेतावुपात्तम्। अनेनानुमानेन सामान्यतः फलवत्त्वे सिद्धे फलविशेषजिज्ञासायाम् अनन्यथासिद्धदृष्टफलकत्वे नादृष्टफलकत्वं युक्तमिति उपस्थितानुपस्थितफलयोर्मध्ये उपस्थितफलकल्पनैवोपस्थितिलाघवाद् भद्रा, नानुपस्थितफलकल्पनेति गङ्गास्नानादेर्दृष्टमलप्रक्षालनादिफलस्यान्यथासिद्धत्वाददृष्टफलस्य विश्वजिद्यागादेरुपस्थितस्य कस्यचित्फलस्याभावे सर्वाभिलषितस्यानुपस्थितस्यापि स्वर्गफलस्य च सम्भवेऽपि प्रकृते मङ्गलेऽनन्यथासिद्धस्योपस्थितस्य च समाप्तिरूपफलस्यैव कल्पनं न्याय्यम्।

एवं च मङ्गलं न समाप्त्यतिरिक्तफलकं तदुद्देशेनाक्रियमाणत्वादित्यादीतरबाधकानुमानेन फलान्तरस्य बाधे मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वात्, यन्नैवं तन्नैवम्, यथा घटादीति परिशेषानुमानेन समाप्तिफलकत्वस्य सिद्धिः। तथा च मङ्गलविशेषत्वावच्छेदेनानुमानेन समाप्तिफलकत्वे प्रमिते समाप्तित्वावच्छिन्नं प्रति मङ्गलस्य कारणत्वमवधृतमिति नास्तिकात्मा मङ्गलवान् समाप्तिमत्त्वात्, यो यः समाप्तिमान् स मङ्गलवान् यथास्तिकः, समाप्तिमांश्च नास्तिकात्मा, ततो मङ्गलवानिति समाप्तिरूपकार्येण मङ्गलरूपकारणस्यानुमितावेव तज्जन्मनि नास्तिकात्मनि मङ्गलस्याभावे जन्मान्तरे मङ्गलमिति न तत्र मङ्गलाभावे समाप्तिसत्त्वलक्षणव्यतिरेकव्यभिचारस्य सन्देहोऽपि। समाप्तिं प्रति च मङ्गलं विघ्नध्वंसद्वारा कारणम्। विघ्नध्वंसं प्रति च मङ्गलस्य विघ्नान्यूनसंख्यकमङ्गलत्वेन कारणत्वमिति कादम्बरीग्रन्थादौ मङ्गलस्य विघ्नन्यूनसंख्यकस्यैव भावात्, अतः समाप्त्यभावेऽपि नान्वयव्यभिचारः। अथवा बलवत्तममङ्गलस्यैव बलवत्तरविघ्नध्वसं प्रति कारणत्वमिति कादम्बरीग्रन्थादौ विघ्नस्य बलवत्तरत्वेन ततो मङ्गलस्य दुर्बलत्वेन ततो बलवत्तरविघ्नध्वंसरूपव्यापाराजननेन तद्द्वारकसमाप्तिफलस्याभावात् नान्वयव्यभिचार इति समाप्त्यर्थं ग्रन्थादौ मङ्गलस्य कर्त्तव्यत्वं सुदृढनिरूढम्।

ननु कार्यकारणतया अभिमतयोरेकाधिकरणवृत्तित्वे सति कार्यकारणभावो भवति, मङ्गलञ्च विघ्नध्वंसद्वारकसमाप्तिफलकम्, विघ्नध्वंसफलकं वा कर्म, करशिरस्संयोगानुकूलव्यापाररूपं स्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलव्यापाररूपं वा? तच्च हस्तादौ वर्तते, विघ्नश्च समाप्तिप्रतिबन्धकदुरितविशेषः आत्मवृत्तिविशेषगुणः, तद्ध्वंसोऽप्यात्मनि वर्तत इति न मङ्गलविघ्नध्वंसयोरेकाधिकरणवृत्तित्वम्। एवं समाप्तिश्चरमवर्णध्वंसरूपा स्वप्रतियोगिसमवायिकारणे गगने वर्तत इति न तयापि सहैकाधिकरण्यं मङ्गलविघ्नध्वंसयोः।

एवञ्च न मङ्गलस्य विघ्नध्वंसं प्रति, विघ्नध्वंसद्वारा वा समाप्तिं प्रति च कारणत्वं सम्भवतीति चेत्—न, स्वरूपसम्बन्धेन विघ्नध्वंसं प्रति स्वानुकूलकृतिमत्त्वसम्बन्धेन मङ्गलस्य कारणत्वम्। स्वानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य कारणत्वम्, स्वरूपसम्बन्धेन विघ्नध्वंसस्य च कारणत्वमित्येवमभ्युपगमे सर्वेषां मङ्गलादीनामेकाधिकरणवृत्तित्वतः कार्यकारणभावोपपत्तेरिति।

प्राचीनमते मङ्गलस्य समाप्तिरेव फलम्, नवीनमते विघ्नध्वंस एवेति विशेषः किंकृत इति जिज्ञासायामयं विवेकः समवतरति, प्राचां मते समाप्तिं प्रति मङ्गलस्य साक्षात् कारणत्वं न, किं तु विघ्नध्वंसद्वारा, तच्च न सम्भवति, विघ्नध्वंसरूपव्यापारेण व्यापारिणो मङ्गलस्यान्यथासिद्धेः। व्यापारिमात्रस्य कारणत्वोच्छेदभयाद् व्यापारेण व्यापारिणो नान्यथासिद्धिरिति च न वाच्यम्, यतो यत्र व्यापारिणः कारणत्वं प्रमाणसिद्धं तदुपपत्तये व्यापारस्य कल्पना, तत्र व्यापारेण व्यापारिणो नान्यथासिद्धिः, यथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति श्रुतिप्रमाणतः स्वर्गं प्रति दर्शादियागस्य कारणत्वं प्रमितम्, तच्च

चिरध्वस्तं फलायालं न कर्मातिशयं विना

[ कुसुमाञ्जलिः १.९ ]

इति वचनात् चिरातीतस्य यागादिकर्मणः कालान्तरभाविस्वर्गं प्रति कारणत्वमदृष्टलक्षणव्यापारमन्तरेण न सम्भवतीति तदुपपत्तये कल्पितस्यादृष्टरूपव्यापारस्य कारणत्वं कल्प्यते। यदि च यागस्य कारणत्वं न स्यात्, न स्यादेव कारणतयादृष्टस्य कल्पनेति नादृष्टरूपव्यापारेण व्यापारिणो यागस्य स्वर्गं प्रत्यन्यथासिद्धिः। यत्र तु व्यापारिणः कारणत्वमन्तरेणापि व्यापारस्य कारणत्वं क्लृप्तम्, न तु व्यापारिणः कारणत्वोपपत्तये तत् कल्प्यते, तत्र व्यापारेण व्यापारिणोऽन्यथासिद्धिर्भवत्येव'। यथा काशीमरणान्मुक्तिरित्यनेन काशीमरणस्य मोक्षं प्रति कारणत्वं प्रतीयते, तदुपपत्तये न तत्त्वज्ञानस्य व्यापारस्य कल्पनम्, किं तु,

तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय

[ श्वेताश्वतरोपनिषत् ३.८ ]

इत्यादिश्रुत्या तत्त्वज्ञानस्य मोक्षं प्रति कारणत्वं क्लृप्तम्, न तत्कल्पने काशीमरणमुक्तिहेतुत्वान्यथानुपपत्तेरपेक्षेति तत्त्वज्ञानरूपेण व्यापारेण व्यापारिणः काशीमरणस्यान्यथासिद्धिः। काशीमरणादिति पञ्चमी च प्रयोजनार्थिका। अन्यथा-

सिद्धस्यापि प्रयोजकत्वं स्वीक्रियते। तथा कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वमिति विघ्नध्वंसस्यापि प्रतिबन्धकाभावविधया समाप्तिं प्रति कारणत्वं क्लृप्तमिति विघ्नध्वंसरूपव्यापारेण व्यापारिणो मङ्गलस्यान्यथासिद्धिरेव। ततश्च मङ्गलस्य विघ्नध्वंस एव फलम्। न च प्राचीनमते स्वतःसिद्धविघ्नविरहवता पुरुषेण कृतस्य मङ्गलस्य विघ्नध्वंसानुत्पादकत्वेऽपि धर्मलक्षणादृष्टोत्पादकत्वतस्तदात्मकव्यापारेण समाप्तिं प्रति कारणत्वसम्भवान्न निस्फलत्वम्,

नवीनमते तु मङ्गलस्य समाप्तिफलकत्वानभ्युपगमात् स्वतः सिद्धविघ्नविरहिणि पुरुषे विघ्नध्वंसरूपफलाभावात् निष्फलत्वं स्यादिति साम्प्रतम्। प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्यसम्बन्धेन प्रतियोगिनोऽपि कारणत्वमिति विघ्नरूपप्रतियोगिनः कारणस्याभावात् तद्ध्वंसानुत्पादेन मङ्गलस्य तदीयस्य निष्फलत्वापत्तेरिष्टत्वात्। शङ्कितनिश्चितभेदेन विघ्नस्य द्वैविध्येन शास्त्रकर्तॄणां शिष्टानां शास्त्रारम्भसमये प्रायो विघ्ननिश्चयाभावेन विघ्नशङ्कयैव मङ्गलाचरणमिति स्वतःसिद्धविघ्नविरहवानपि 'मयि विघ्नो नास्तीति' न निश्चेतुं प्रभुरिति विघ्नशङ्कया मङ्गलमाचरन्नोपालम्भनीयो भवितुमर्हति। मङ्गलं विघ्नध्वंसार्थं वेदबोधितकर्तव्यताकं, विघ्नध्वंसार्थमलौकिकाविगीतशिष्टाचारविषयत्वात्, यो यदर्थमलौकिकाविगीतशिष्टाचारविषयः, स तदर्थं वेदबोधितकर्तव्यताकः, यथा दर्शादिः स्वर्गार्थमलौकिकाविगीतशिष्टाचारविषयः स्वर्गार्थं वेदबोधितकर्तव्यताकः, वेदश्च स्वर्गकामो दर्शपौर्णमासाभ्यां यजेत इत्येवंरूपः प्रसिद्धः। विघ्नध्वंसार्थमलौकिकाविगीतशिष्टाचारविषयश्च मङ्गलम्। तस्माद् विघ्नध्वंसार्थं वेदबोधितकर्तव्यताकमित्यनुमितश्च विघ्नध्वंसकामो मङ्गलमाचरेदित्येवंरूपः स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य विघ्नध्वंसरूपफलोपधायकत्वाभावेऽपि नाप्रामाण्यशङ्कामुपगच्छति। साङ्गे कर्मणि फलावश्यम्भाव इति नियमेनाङ्गसहितस्यैव कर्मणः फलजनकत्वं विघ्नध्वंसरूपफलजनने च मङ्गलस्य विघ्नरूपप्रतियोगिनोऽङ्गतया तदभावान्मङ्गलस्य फलाजनकत्वमिति साङ्गस्य मङ्गलस्य विघ्नध्वंसरूपफलजनकत्वबोधको वेदोऽबाधितप्रसर एव। अतएव प्रायश्चित्तस्य पापध्वंसजनकत्वबोधकवेदस्य पापभ्रमेण कृतस्य प्रायश्चित्तस्य पापध्वंसाजनकत्वेऽपि नाप्रामाण्यम्। यच्च

सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः

इति वचनाद् गणेशस्तवपाठजन्ये विघ्नध्वंसे मङ्गलं विनापि जायमाने व्यतिरेकव्यभिचारात् मङ्गलं विघ्नध्वंसं प्रति कारणं न सम्भवति, न च विघ्वध्वंसे वैजात्यम्, येन विजातीयविघ्नध्वंसं प्रति मङ्गलं कारणम्, विजातीयविघ्नध्वंसं प्रति विनायक-

स्तवपाठादिः कारणम्, यथा तृणारणिमणिजन्येषु वह्निषु वैजात्यं परिकल्प्य विजातीयवह्निं प्रति तृणादिकं कारणम्, तद्विजातीयवह्निं प्रत्यरणिः कारणम्, तद्विजातीयवह्निं प्रति च मणिः कारणम्, तथा प्रकृतेऽपि स्यात्। यथा वा

यवैर्यजेत व्रीहिभिर्वा यजेत

इति वेदवचनप्रामाण्याद् यवकारणकयागव्रीहिकारणकयागयोरेकजातीयस्वर्गफलं प्रति वैकल्पिकी कारणता, तथा प्रकृते तथा च बोधकं वचनं नास्ति, येन वैकल्पिकी कारणतामभ्युपगम्येतापि।

तत्रेदमुत्तरम्—यथा वह्निव्याप्यधूमवान् पर्वत इति परामर्शाभावेऽपि वह्निव्याप्यालोकवान् पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिर्जायते, एव वह्निव्याप्यालोकवान् पर्वत इति परामर्शाभावेऽपि वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिर्जायते, इत्येवं प्रत्येकं व्यभिचारात् सामान्यतः पर्वतो वह्निमानित्यनुमितित्वावच्छिन्नं प्रति निरुक्तपरामर्शयोः कारणत्वं न संभवति, किं तु वह्निव्याप्यधूमवान् पर्वत इति परामर्शाव्यवहितोत्तरजायमान'पर्वतोवह्निमान्' इत्यनुमितिं प्रति वह्निव्याप्यधूमवान् पर्वत इति परामर्शः कारणम्, वह्निव्याप्यालोकवान् पर्वत इति परामर्शाव्यवहितोत्तरजायमान'पर्वतो वह्निमान्' इत्यनुमितिं प्रति वह्निव्याप्यालोकवान् पर्वत इति परामर्शः कारणम्, तथा मङ्गलाव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति मङ्गलत्वेन मङ्गलस्य कारणत्वम्, विनायकस्तवपाठाव्यवहितोत्तरजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति विनायकस्तवपाठत्वेन विनायकस्तवपाठस्य कारणत्वमित्येवं कार्यकारणभावाभ्युपगमे व्यभिचाराभावात्। उक्तदिशावधृते च विघ्नध्वंसं प्रति मङ्गलस्य कारणत्वे प्रतिबन्धकाभावविधया समाप्तिं प्रति कारणीभूतस्य विघ्नध्वंसस्य कारणत्वात् मङ्गलं समाप्तिप्रयोजकमित्यभिसन्धाय शास्त्रकारा ग्रन्थादौ मङ्गलमारचयन्तीति। बुद्धिप्रतिभादिकारणकलापसहकृतश्च विघ्नध्वंसः समाप्तिरूपफलोपधानभाग् भवतीति बुद्धिप्रदिभादिकारणवैकल्ये समाप्तिरूपफलोपधानाभावेऽपि नान्वयव्यभिचारः। यद्यपि स्वतःसिद्धविघ्नविरहवत्कर्तृकग्रन्थसमाप्तेर्विघ्नध्वंसं विनापि भावेन समाप्तित्वावच्छिन्नं प्रति विघ्नध्वंसत्वेन विघ्नध्वंसस्य कारणत्वं न सम्भवति, तथापि समाप्तिं प्रति विघ्नसंसर्गाभावत्वेन विघ्नध्वंसस्य कारणत्वं निर्वहति, अन्यत्रापि प्रतिबन्धकध्वंसप्रागभावात्यन्ताभावानां प्रतिबन्धकससर्गाभावत्वेन त्रितयानुगतेन कारणत्वमामनन्ति धीराः।

वस्तुतः कार्यानुत्पादप्रयोजकसम्बन्धविशेषेण प्रतिबन्धकवत्यपि प्रतिबन्धकात्यन्ता-

भावातिरिक्तसकलकारणवति देशे सम्बन्धान्तरावच्छिन्नप्रतिबन्धकनिष्ठप्रतियोगिताकात्यन्ताभावसत्त्वात् कार्योत्पादापत्तिवारणाय येन सम्बन्धेन कार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकस्य, तत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावत्वेनैव प्रतिबन्धकाभावस्य कारणत्वं वाच्यम्, ध्वंसप्रागभावीयप्रतियोगित्वयोश्च सामान्यधर्मावच्छिन्नत्वं सम्बन्धावच्छिन्नत्वं च प्रयोजनविरहान्नाभ्युपगम्यते। नव्यमते चात्यन्ताभावस्य प्रतियोगिध्वंसप्रागभावाभ्यां सह न विरोध इति यत्र विघ्नध्वंसो विघ्नप्रागभावो वा वर्तते, तत्रापि विघ्नात्यन्ताभावोऽस्तीति स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिं प्रति समवायसम्बन्धावच्छिन्नदुरितविशेषलक्षणविघ्नत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाव एव कारणम्, स चात्यन्ताभावः स्वतः सिद्धविघ्नविरहवति पुरुषे विघ्नसामग्रीविरहप्रयुक्तो मङ्गलजन्यविघ्नध्वंसवति च पुरुषे विघ्नध्वंसप्रयुक्त इति न व्यभिचार इति नवीनमतनिष्कर्षः ॥

केचित्तु शिष्टाः क्वचिदभिष्टे प्रवर्तमाना मङ्गलमाचरन्त्येव, यत्कर्तृकग्रन्थे आदौ मङ्गलं दृश्यते तस्मिन् कर्तरि अयं शिष्टाचारपरिपालनपरायणः शिष्ट इति भवति द्रष्टुः सम्प्रत्ययः, ततः शिष्टकर्तृकोऽयं ग्रन्थोऽध्येतुमध्यापयितुं च योग्य इत्युपात्तबुद्धिः तदध्ययनाध्यापनादौ निर्विचिकित्सं प्रवर्तते। तथाप्रवर्तमानश्च तत्प्रतिपादितार्थसम्यग्ज्ञानवान् तत्त्वमधिगत्य निरस्ताज्ञानतत्प्रभवकामक्रोधादिः रागद्वेषमूलकप्रवृत्तिविमुखोऽपूर्वकर्मानुत्पत्तितः परापरजन्मानधिगतौ प्रारब्धकर्मणो भोगादेव संक्षये सञ्चितकर्मणां तत्त्वज्ञानाग्निना भस्मसाद्भावे दुःखात्यन्तविगमलक्षणं मुक्तिमासादयतीति भवति सफलं शिष्टाचारपरिपालनफलकं मङ्गलमिति शिष्टाचारपरम्परापरिपालनकर्तव्यताकं मङ्गलं ग्रन्थादाववश्यमेवारम्भणीयमित्याहुः। यद्यपि—

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इत्यादिवचनाद् भवे भक्तिवद् गुरुभक्तिरप्यर्थावबोधने निमित्तमिति तत्प्रयुक्तगुरुनमस्कारणादिलक्षणं मङ्गलमपि कर्तव्यपद्धतिमञ्चति, तथाप्यन्यदर्शनतोऽक्षपाददर्शनकणभक्षदर्शनयोर्जगत्कर्तुरीश्वरस्य स्वीकरणमेव विशेष इति तन्नमस्करणलक्षणमेव परममङ्गलमित्यभिसन्धायेश्वरनमस्करणमिदमादृतम्।

तुष्टेः प्रसादात्। बन्धात् शरीरेन्द्रियादावात्माभेदलक्षणमिथ्याज्ञानात्। मोचयतः तत्त्वज्ञानोत्पादनेन मिथ्याज्ञानबन्धनत्रोटनतो विशुद्धमात्मानं भक्तस्य कुर्वतः, संसृतिलक्षणकारागारान्निष्काशयत इति यावत्, अतुष्टेः अप्रसादात्। पुनः बध्नतः निरुक्त-

मिथ्याज्ञानलक्षणबन्धनेन बन्धयित्वा संसृतिरूपकारागारे क्षिपतः। यस्य निग्रहानुग्रहसमर्थस्य। इदं परिदृश्यमानम्। विश्वं चराचरात्मकं जगत्। कारागारं बन्धनगृहम्। तमीश्वरं नित्यज्ञानेच्छायत्नलक्षणैश्वर्ययुक्तम्। नौमि प्रणमामि।

यद्यपि इष्टसाधनताद्विष्टसाधनताधीप्रभवरागद्वेषपर्यवसितप्रसादाप्रसादरूपे तुष्ट्यतुष्टी नित्यज्ञानादिमतः कृतकृत्यस्य भगवतो न स्तः, तथापि तदुक्तवेदविहितनिषिद्धाचरणप्रभवधर्माधर्मावेव प्रसादाप्रसादलक्षणे तुष्ट्यतुष्टी उपचरिते महेशानस्य, ताभ्यामेव च बन्धमोक्षौ नरतिर्यग्देवनरकगतिलक्षणसंसृतिविभ्रम्यमाणानां जीवानाम्, वेदलक्षणोक्तिरेव भगवतो महेशानस्याज्ञा, तद्विहिताचरणमेव तस्य तुष्टिः, तन्निषिद्धाचरणं च तस्यातुष्टिः। वस्तुतः,

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥

इति भगवद्गीतावचनादीश्वरार्पणबुद्ध्या सकलकर्मणामाचरणमेव निष्कामप्रवृत्तिरूपं भगवतस्तुष्टिः, सकामप्रवृत्तिरेव च तस्यातुष्टिः। स्वर्गाद्यर्थवेदविहितदर्शादियागाचरणमप्यतुष्टिरेव, तज्जन्यधर्मस्यापि देवलोकावाप्तिलक्षणसंसृतिकारणतया बन्धहेतुत्वमेव, शरीरादावात्मत्वबुद्धिलक्षणमिथ्याज्ञानविजृम्भितत्वं तस्याप्यवशिष्टम्। ब्राह्मणक्षत्रियवैश्यादिजातिब्रह्मचर्याद्याश्रमसमाश्रयणेनोपनयनादियागादिवेदविहितकर्मणां शरीराद्यात्मत्वबुद्धिलक्षणमिथ्याज्ञानावलम्बनेन प्रवृत्तानां बन्धनिदानत्वमेवेति सकलकर्मणामीश्वरार्पणबुद्ध्याचरणमेव तुष्टिरिति दिक्।

अथ परमकारुणिको मुनिप्रवरोऽक्षपादस्तापत्रयाभिभूतलोकजिज्ञासिततदत्यन्तक्षयलक्षणापवर्गकारणतत्त्वज्ञानविषयोपदर्शकान्वीक्षिकीशास्त्रं लोकानां शमाय निर्ममे। यस्यादिमं सूत्रम्—

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति।

अत्र प्रमाणाधीना प्रमेयसिद्धिरिति प्रथमं प्रमाणमुद्दिष्टम्। उद्देशलक्षणपरीक्षात्मकं निरूपणमपि तस्य प्रथममभ्यर्हितं, तच्चाकरे विस्तरतः प्रपञ्चितम्। किन्तु सूक्ष्मशेमुषीनां ततस्तदवगमस्य शक्यत्वेऽपि स्थूलमतीनां ततस्तदवगमोऽशक्य इत्यतः संक्षेपतः सुखावबोधस्तेषां भवत्वित्यभिप्रायवान् प्रमाकरणं प्रमाणमित्यादिकं प्रमाणलक्षणफलीभूतप्रमानिरूपणमन्तरेण न सम्भवतीति प्रमां लक्षयति—

## तत्त्वानुभूतिः प्रमेति ।

अत्र प्रमेति लक्ष्यनिर्देशः, तत्त्वानुभूतिरिति लक्षणनिर्देशः, लक्ष्यतावच्छेदकसमनियतो धर्मो लक्षणम्। समनियतत्वञ्च तद्व्याप्यत्वे सति तद्व्यापकत्वम्। व्याप्यत्वञ्च तदभाववदवृत्तित्वम्। व्यापकत्वञ्च तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तथाहि, लक्ष्या प्रमा, तन्निष्ठा लक्ष्यता, तदवच्छेदकं प्रमात्वम्, तत्समनियतो धर्मः तत्त्वानुभूतित्वम्। तस्य प्रमात्वव्याप्यत्वे सति प्रमात्वव्यापकत्वं समस्ति, यतः प्रमात्वाभावाधिकरणं यदप्रमादिकं तन्निरूपितवृत्तित्वस्याभावस्तत्त्वानुभूतित्वे समस्तीत्येवं प्रमात्वव्याप्यत्वं तत्र वर्तते। प्रमात्वसमानाधिकरणः प्रमात्वाधिकरणवृत्तिर्योऽत्यन्ताभावः स न तत्त्वानुभूतित्वाभावः, किं तु घटाद्यत्यन्ताभावः, तत्प्रतियोगितानवच्छेदको धर्मस्तत्त्वानुभूतित्वत्वम्, तद्वत्त्वं तत्त्वानुभूतित्वे समस्तीत्येवं प्रमात्त्वव्यापकत्वमपि तत्र विद्यते इति भवति लक्ष्यतावच्छेदकप्रमात्वसमनियतस्तत्त्वानुभूतित्वरूपधर्मः प्रमालक्षणमिति। नाममात्रेण वस्तुसंकीर्तनमुद्देश इति लक्षणवाक्यघटको यो लक्ष्यनिर्देशः स उद्देशः, इदं लक्षणमस्य सम्भवति न वेति विचारः परीक्षा, उद्देशस्य पक्षज्ञानं फलम्, लक्ष्यते इतरव्यावृत्ततया ज्ञायतेऽनेनेति व्युत्पत्तावितरभेदानुमितिः, लक्ष्यते व्यवह्रियतेऽनेनेति व्युत्पत्तौ व्यवहारो लक्षणस्य प्रयोजनम्। लक्षणगताव्याप्त्यतिव्याप्त्यसम्भवदोषपरिहारः परीक्षायाः फलम्, अव्याप्तिर्नाम लक्षणस्य लक्ष्यैकदेशावृत्तित्वं, लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वे सति लक्ष्यतावच्छेदकसमानाधिकरणत्वमिति यावत्, अलक्ष्यवृत्तित्वमतिव्याप्तिः, लक्ष्यतावच्छेदकाभावसामानाधिकरण्यमिति यावत्, लक्ष्यमात्रावृत्तित्वमसम्भवः, लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वमिति यावत्। लक्ष्येतरभेदानुमितिहेतोर्लक्षणस्य पक्षीभूतलक्ष्यैकदेशावृत्तित्वे पक्षैकदेशे हेत्वभावो भागासिद्धिरिति, लक्षणस्यालक्ष्यवृत्तित्वे लक्ष्येतरत्वरूपसाध्याभावाधिकरणवृत्तित्वं व्यभिचार इति। लक्षणस्य लक्ष्यमात्रावृत्तित्वे पक्षतावच्छेदकलक्ष्यतावच्छेदकावच्छेदेन पक्षे हेत्वभावलक्षणः स्वरूपासिद्धिरित्येवमव्याप्त्यतिव्याप्त्यसम्भवदोषाणां हेत्वाभासतया परिहारो विधेय इति। यद्यपि असता शशशृङ्गादिना सममिन्द्रियसन्निकर्षाभावान्नासतः प्रत्यक्षम्, तेन समं लिङ्गस्य कस्यचिदविनाभावाभावात् परामर्शाभावेन नानुमितिः, तेन सह न कस्यचित् सादृश्यमिति नोपमितिः, तद्वाचकस्याखण्डपदस्याभावान्न शाब्दबोध इत्येवं कारणाभावान्नासतः ख्यातिर्नैयायिकादिभिरुपेयते, तथा च

समस्तीत्यतिव्याप्तिग्रस्तमिदं लक्षणम्, तथापि येन सम्बन्धेन येन धर्मेण यद्वत्त्वं यस्य तस्य तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतन्निष्ठनिरूपकतानिरूपिताधिकरणत्वं तत्त्वम्, तस्यानुभवः निरुक्ताधिकरणतावन्निष्ठविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतन्निष्ठप्रकारतानिरूपको निर्णयात्मकोऽनुभवः प्रमेति तत्त्वानुभूतिः प्रमेत्यस्य निष्कर्षः। प्रत्यक्षत्वादिना साङ्कर्यात् प्रमात्वं सामान्यरूपं न सम्भवतीत्युक्तलक्षणादरः।

अत्र तत्त्वपदव्यावृत्तिमुपदर्शयति,

**तत्त्वेत्यतत्त्वधियां तर्कसंशयविपर्यासानां निरासः।**

तत्त्वपदानुक्तावनुभूतिः प्रमेत्येव लक्षणवाक्यं स्यात्, अनुभूतित्वं च प्रमाभिन्नेषु तर्कसंशयविपर्यासेषु विद्यत इत्यतिव्याप्तिः स्यात्, तत्त्वपदोपादाने तु तत्त्वानुभूतित्वं न तर्कादिषु विद्यत इति न तेष्वतिव्याप्तिरित्यर्थः। व्यापकाभाववत्तया निर्णीते धर्मिणि व्याप्यारोपेण व्यापकारोपः तर्कः तस्य तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकानुभूतित्वं नास्तीति, संशयस्यैकधर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानरूपस्य निर्णयरूपत्वं नास्ति, विपर्यासस्य तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकनिर्णयरूपस्य प्रकारतायां तद्वन्निष्ठविशेष्यतानिरूपितत्वं नास्तीति नोक्तप्रमालक्षणस्य तेषु सम्भवः।

अनुभूतिपदव्यावृत्तिमुपदर्शयति,

**अनुभूतिरिति स्मृतेः।**

अनुभूतिपदोपादानात् स्मृतेः स्मरणस्य, निरास इत्यनुवर्तते। यद्यनुभूतिरिति नोपादीयेत तदा 'तत्त्वं प्रमे'त्युक्तौ पदार्थमात्रस्य तत्त्वरूपत्वेन प्रमात्वापत्तिः, यदि चानुभूतिरित्यस्य स्थाने ज्ञानमित्युच्यते तदा तत्त्वज्ञानं प्रमेति स्यात्, एवं च स्मृतेरपि प्रमात्वापत्तौ तत्करणमनुभवः पञ्चमं प्रमाणमापद्येत इति अनुभूतिरित्युक्तम्। न च स्मृतेस्तद्वति तत्प्रकारकत्वेन अनुभवस्येवास्तु प्रमात्वं तत्करणमनुभवोऽपि प्रमाणान्तरं भवतु नामेति साम्प्रतम्, यथार्थानुभवजन्या स्मृतिर्यथार्था, अयथार्थानुभवजन्या स्मृतिरयथार्थेति स्मृतेर्यथार्थत्वायथार्थत्वे अनुभवयथार्थत्वायथार्थत्वनिबन्धने इति परमुखनिरीक्षकत्वेन स्वतः प्रमात्वाभावात्। न च स्मृतेः प्रमात्वापत्तिवारणाय मीमांसकाभिमतमनधिगतार्थाधिगन्तृ ज्ञानं प्रमेत्येवास्तु प्रमालक्षणमिति वाच्यम्, अयं घटोऽयं घट इत्येवं चक्षुरादीन्द्रियसन्निकर्षजन्यधारावाहिकबुद्धीनां पूर्वपूर्वबुद्धिसमानविषयकोत्तरोत्तरबुद्धिस्वरूपाणामधिगतार्थाधिगन्तॄणामनधिगतार्थाधिगन्तृत्वाभावेनाव्याप्तेः, प्रमा-

त्मकप्रत्यक्षादिषु चानधिगतार्थाधिगन्तृत्वेनातिव्याप्तेरुक्तलक्षणासम्भवात्। तदुक्तं कुसुमाञ्जलावुदयनाचार्येण—

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक्।
यथार्थानुभवो मानमनपेक्षतयेष्यते ॥ [ ४. १ ] इति

**सा नित्याऽनित्या च, आश्रयभेदात्।**

**तत्र नित्याया आश्रयः प्रमाणम्। असूत्रयच्च 'आप्तप्रामाण्यात्' (न्या. सू. २-१-६८) इति। अभाष्ययच्च—आप्तानां प्रमाणता साक्षात्कृतधर्मता (वा. भा. २-१-६८) इति। अनित्यायाः पुनः प्रमायाः साधकतमं प्रमाणम्, अनित्याया इति विषयक्रियासूचनम्, प्रमाया इति च्छिदादीनां व्युदासः, साधकेत्यसाधकानामाकाशादीनां व्युदासः, तममिति प्रमातृप्रमेययोः। इति।**

सा प्रमा, आश्रयभेदात् जीवेश्वररूपाधारभेदात्, जीवगता प्रमा इन्द्रियलिङ्गज्ञानादिकारणजन्यत्वेन अनित्या, ईश्वरगता प्रमा कारणाजन्यत्वेन नित्या, अतएव जन्यज्ञानवान् जीवः, नित्यज्ञानवान् ईश्वर इत्येवं जीवेश्वरयोर्लक्षणभेदः। तत्र नित्यानित्यप्रमयोर्मध्ये, नित्याया ईश्वरगतायाः नित्यप्रमायाः, आश्रयः समवायेनाधार ईश्वरः, प्रमाणं प्रमाणमिति व्यपदिश्यते। प्रमाणं शिवः; प्रमाणमीश्वरः इत्यादिर्यो व्यवहारस्तत्र प्रमाकरणं प्रमाणमिति न व्युत्पत्तिः, तत्प्रमायाः नित्यत्वेन तत्करणत्वस्यासम्भवात्, किन्तु प्रमाया आश्रयः प्रमाणमिति व्युत्पत्त्यैव तद्व्यवहारः प्रवर्तते।

ईश्वरस्य प्रामाण्ये अक्षपादसम्मतिमुपदर्शयति—असूत्रयच्च 'आप्तप्रामाण्यात्' इति। वात्स्यायनभाष्यसम्मतिञ्चावेदयति—अभाष्ययच्च 'आप्तानां प्रमाणता साक्षात्कृतधर्मता' इति। आप्ता यथादृष्टार्थवक्तारः, तेषां, साक्षात्कृतो धर्मो यैस्ते साक्षात्कृतधर्माणस्तेषां भावः साक्षात्कृतधर्मता, धर्मपदं चादृष्टपरं, सैव प्रमाणता। वेदवक्तुरीश्वरस्य प्रामाण्यात्तदुच्चरितो वेदोऽपि प्रमाणम्, वेदजन्या च प्रमाऽस्मदादीनां तत्करणत्वाच्च वेदस्य प्रमाकरणत्वं प्रामाण्यं सिद्धिपथमुपैति इति। जीवात्मनश्च प्रमा जन्या, तत्र चायोगस्तदसत्त्वकालापेक्षयेति तद्व्यवच्छेदो नास्ति, ईश्वरस्य तु प्रमा नित्येति तद्योग एव सर्वदा न तु तदयोग इति प्रमायाः योऽयमयोगव्यवच्छेदस्तदेव प्रामाण्यम्। प्रमातृत्वमपि तस्य प्रमाश्रयत्वमेव नतु प्रमासमवायिकारणत्वं, तत्प्रमाया नित्यत्वेन समवायसम्बन्धावच्छिन्नायाः कार्यतायास्तन्निष्ठाया असंभवेन तन्निरूपिततादात्म्य-

सम्बन्धावच्छिन्नकारणत्वस्येश्वरेऽभावात्। तदुक्तं कुसुमाञ्जलावुदयनाचार्येण—

मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते॥ [४.५] इति

अनित्याया पुनरिति। पुनरिति नित्यप्रमातोऽनित्यप्रमायां वैशिष्ट्यमुपदर्शयति, नित्यप्रमाया आश्रयः प्रमाणम् अनित्यप्रमायास्त्वन्यादृशं तत्। तदेवाह—प्रमायाः साधकतमं प्रमाणमिति।

ननु अनित्यप्रमात्वं प्रत्यक्षानुमित्यादिगतं यदेकं तदवच्छिन्नं प्रति नानुगतकिञ्चिद्-धर्मावच्छिन्नं करणमित्यनित्यप्रमायाः साधकतमं प्रमाणमित्युक्तिमात्रं स्यादत आह—अनित्याया इति विषयक्रियासूचनमिति। ईश्वरगताया नित्यप्रमाया विषयप्रकाशता निर्विषयस्य ज्ञानत्वासम्भवात् सविषयत्वं ज्ञानस्य स्वभाव इति स्वभावबलादेव भवति नतु कारणबलात्; नित्यत्वाः कारणाभावात्। अतएव तस्यां नियतविषयकत्वसाधकं न किञ्चित् प्रमाणमिति विनिगमनाविरहात् सर्वविषयकत्वं, क्रियत इति क्रिया प्रत्यक्षा-नुमित्यादिरूपा, नित्या तु न क्रियत इति क्रियारूपापि सा न भवति, अतएव सा नेन्द्रियादिजन्यत्वप्रयुक्ता प्रत्यक्षादिक्रियारूपा, केवलं ज्ञानाकरणकज्ञानत्वरूपजन्य-प्रत्यक्षसाधारणधर्मयोगात् प्रत्यक्षव्यपदेश्येति, अनित्यायास्तु कारणनियमितो विषय-नियमः, उत्पत्तिमत्त्वाच्च क्रियत इति व्युत्पत्तिनिमित्तलभ्यः क्रियाव्यपदेशः, अथवा साधकतमं करणं तच्च जन्याया एव क्रियाया भवति न नित्याया इति विषयीभूतायाः क्रियायाः सूचनमित्यर्थः।

प्रमाया इत्युक्तेः प्रयोजनमुपदर्शयति प्रमाया इति, छिदादीनां व्युदास इति, अनित्या छिदादिक्रियाऽपि भवति; तस्याः साधकतमं कुठारादिकमिति तत्र प्रमाया लक्षणातिव्याप्तिवारणार्थं प्रमाया इत्युपात्तं च्छिदादिकञ्च प्रमा न भवतीति न तत्-करणेऽतिव्याप्तिरित्यर्थः। साधकपदव्यावृत्तिमाह—साधकेत्यसाधकानामाकाशादीनां व्युदास इति, तरतमादीनां पदान्तरान्ते एव प्रयोग इति साधकेत्यस्यानुपादाने साधक-तममित्यनुपात्तमेव स्यात्, एवञ्च षष्ठीविभक्त्यर्थसम्बन्धबलादनित्यप्रमासंबन्धि प्रमाण-मिति आकाशादीनां विषयतयाऽनित्यप्रमासम्बन्धिनां प्रमाणत्वमापतितम्, साधक-पदोपादाने च तेषां प्रमासाधकत्वाभावान्नातिव्याप्तिरित्यर्थः। तमपदोपादानप्रयो-जनमाह—तममिति प्रमातृप्रमेययोरिति, व्युदास इत्यस्यानुकर्षः, प्रमातृप्रमेययोः प्रमां

प्रति साधकत्वेऽपि साधकतमत्वं नास्ति तत्र प्रमातुः प्रमामात्रं प्रति साधकत्वं, प्रमेयस्य च प्रत्यक्षप्रमां प्रति साधकत्वमिति बोध्यम्।

प्रत्यक्षमेकमेव प्रमाणमिति पृथिव्यादिभूतचतुष्टयतत्त्ववादिनश्चार्वाकाः। द्रव्यादिसप्तपदार्थतत्त्ववादिनो वैशेषिकाः, रूपस्कन्धादिपञ्चस्कन्धतत्त्ववादिनो बुद्धतनयाश्च प्रत्यक्षानुमाने द्वे एव प्रमाणे इत्यामनन्ति। प्रकृतिमहदहंकारादिपञ्चविंशतितत्त्ववादिनौ कापिलपातञ्जलौ प्रत्यक्षानुमानागमास्त्रयः प्रमाणानीत्यभ्युपगच्छतः। प्रत्यक्षानुमानोपमानागमार्थापत्तयः पञ्च प्रमाणानीति प्राभाकराः। प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धयः षट् प्रमाणानीति भट्टवेदान्तिनौ। चेष्टासम्भवैतिह्यादिसहितानि तानि प्रमाणानीत्यप्यन्ये वदन्ति। जैनाश्च प्रत्यक्षपरोक्षे द्वे प्रमाणे, तत्र प्रत्यक्षं द्विविधम्— सांव्यवहारिकं पारमार्थिकञ्च। तत्राद्यमिन्द्रियजन्यमनिन्द्रियजन्यञ्च, अनिन्द्रियं मनः, पारमार्थिकं विकलं सकलं च। विकलमवधिज्ञानं मनःपर्यायज्ञानञ्च, सकलं केवलज्ञानम्, स्मृतितर्कप्रत्यभिज्ञानानुमानागमभेदेन पञ्चविधं परोक्षप्रमाणमित्यभ्युपगच्छन्ति।

इत्थं प्रमाणसंख्याभ्युपगमप्रस्थानभेदेऽक्षपादानुमतं कीदृशं प्रमाणपरिसंख्यानमित्याकांक्षायामाह—

**तच्चतुर्विधं, परिसंख्यानात्। तत्र इन्द्रियजप्रमासाधकतमं प्रत्यक्षम्, इन्द्रियजेति लिङ्गादीनां निराशः। प्रमेति सुखादिसाधनानामाभासानां च, साधकेति अबुद्धिरूपकरणलाभाय, तममित्यकरणस्य निराशः, तदेतत् योग्ययोगिसाधारणम्, लौकिकमात्रस्य तु शास्त्रेऽधिकारादिति, साक्षात्कारिणी प्रमा प्रत्यक्षफलमिति।**

तत् प्रमाणम्, चतुर्विधं चत्वारो विधा भेदा यस्येति व्युत्पत्त्या चतुःप्रकारमित्यर्थः, कथमित्यभिकांक्षायामाह—परिसंख्यानादिति, परिसंख्यानं न्यूनाधिकसंख्याव्यवच्छेदफलकं परिगणनं तस्मात्, प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति महर्षिणा गौतमेन सूत्रणात्। तत्र प्रत्यक्षानुमानोपमानशब्दानां मध्ये। इन्द्रियजप्रमासाधकतममिति लक्षणनिर्देशः, प्रत्यक्षमिति लक्ष्यनिर्देशः, इन्द्रियजेत्यस्य इन्द्रियार्थसन्निकर्षजेत्यर्थः। तेन प्रमामात्रस्य मनोरूपेन्द्रियजन्यत्वेऽपि नानुमानादिप्रमाणेऽतिव्याप्तिः, अथवा इन्द्रियत्वेनेन्द्रियजत्वं विवक्षितम्, मनसस्तु नानुमित्यादिज्ञाने इन्द्रियत्वेन जनकत्वम्, किन्तु मनस्त्वेनेति। इन्द्रियजेतिपदव्यावृत्तिमाह—इन्द्रियजेति लिङ्गादीनां निरास इति, लिङ्गादीनामित्यस्य स्थाने लिङ्गजादीनामिति पाठः समुचितः। इन्द्रिय-

जेत्यस्यानुपादाने प्रमापदेनानुमित्यादिप्रमाऽपि लिङ्गादिजन्या ग्रहीतुं शक्यत इति तत्साधकतमेऽनुमानादावतिव्याप्तिः स्यात्, इन्द्रियजेत्यस्योपादाने तु लिङ्गजादिप्रमाया इन्द्रियजन्यत्वाभावान्न तत्साधकतमेऽतिव्याप्तिरित्यर्थः ।

प्रमापदोपादानप्रयोजनमुपदर्शयति— प्रमेति सुखादिसाधनानामाभासानां चेति । निरास इत्यस्यानुकर्षः । इन्द्रियजं सुखदुःखादिकं तत्साधकतमं पुण्यपापादिकम्, तत्र प्रत्यक्षप्रमाणलक्षणस्येन्द्रियजसाधकतमत्वस्यातिव्याप्तिः स्यात् । एवं प्रमास्थाने ज्ञानपदोपादाने इन्द्रियजज्ञानं भ्रमस्तत्साधकतमत्वस्य पित्तदूरत्वादिदोषादिषु सत्त्वादतिव्याप्तिस्तेषां भ्रमजनकत्वादाभासतेति । प्रमापदोपादाने च सुखदुःखादिभ्रान्तिज्ञानेषु प्रमात्वाभावात् तत्साधकतमेषु नातिव्याप्तिरित्यर्थः । साधकेत्यस्यानुपादाने तममित्यप्यनुपात्तमेव स्यात्, एवञ्च इन्द्रियजप्रमा प्रत्यक्षमिति स्यात्, तथाचेन्द्रियमज्ञानरूपं प्रत्यक्षप्रमाणतयाऽभिमतं न लभ्येतेत्यतस्तल्लाभाय साधकपदोपादानमित्याह—साधकेत्यबुद्धिरूपकरणलाभायेति । विशिष्टप्रमात्मकप्रत्यक्षं प्रति विशेषणप्रत्यक्षात्मकप्रमायाः कारणत्वात् तस्य लक्ष्यतया तत्र लक्षणसमन्वय एवेति न तत्रातिव्याप्तिरसम्भवो वा, अव्याप्तिस्त्वबुद्धिरूपे करणे स्यादितीत्थमुक्तम् । तमपदप्रयोजनमुपदर्शयति— तममित्यकरणस्य निरास इति, इन्द्रियजप्रमासाधकं प्रमातृप्रमेयद्वयमपि न तत्प्रमाणमिति तत्रातिव्याप्तिवारणाय तममित्युक्तमित्यर्थः ।

इदञ्च प्रत्यक्षप्रमाणलक्षणं योगाभ्यासजनितधर्मप्रत्यासत्तितो मनोरूपेन्द्रियजन्यं यद्योगिप्रत्यक्षं यच्चास्मदादिप्रत्यक्षं तदुभयसाधकतमे इन्द्रिये समनुगतमित्याह— तदेतद् योग्ययोगिसाधारणमिति । नित्यप्रमाश्रयेश्वरात्मकप्रमाणगतं नैतद् यथा तथा योगिप्रत्यक्षप्रमाणगतमपि माभूदिति तद्व्यावृत्तमेवैतद् वाच्यं किमिति तदनुगमनेनान्यदेव योगिप्रत्यक्षप्रमाणगतं प्रत्यक्षप्रमाणलक्षणमस्त्वित्यत आह—लौकिकमात्रस्य शास्त्रेऽधिकारादिति इति, शास्त्रे प्रमाणचर्चायां लौकिकमात्रस्य लौकिकप्रमाणमात्रस्य मात्रपदेन लोकोत्तरेश्वरप्रमाणस्य व्यवच्छेदः । अधिकारात् तत्तद्विषयसिध्यर्थमादरणात्, योगिप्रत्यक्षप्रमाणस्य लोकव्यवहारविषयत्वेन लौकिकतया तत्साधारणस्यानित्यप्रत्यक्षप्रमाणलक्षणस्योपादेयत्वादित्यर्थः । प्रत्यक्षप्रमाणस्य फलमुपदर्शयति— साक्षात्कारिणी प्रमा प्रत्यक्षफलमितीति, तत्तदिन्द्रियार्थसाक्षात्कारस्वरूपा प्रमा प्रत्यक्षप्रमाणफलमित्यर्थः ।

सूत्रे प्रत्यक्षप्रमाणानन्तरमुपदिष्टमनुमानप्रमाणं लक्षयति—

**लिङ्गपरामर्शोऽनुमानमिति। लिंगेति सादृश्यपरामर्शस्य प्रत्यभिज्ञानस्य लिङ्गाभासपरामर्शस्य च निरासः, परामर्श इति द्वितीयलिङ्गदर्शनस्य ततः स्मृतेश्च निरासः। लिङ्गन्तु निरुपाधिसाध्यसम्बन्धशालि। निरुपाधीति मैत्रतनयत्वादीनां निरासः, साध्यसम्बन्धशालीति साध्यरहितानां धर्माणां निरुपाधीनां निराशः, अनुमितिरस्य फलमिति।**

लिङ्गपरामर्श इति लक्षणनिर्देशः, अनुमानमिति लक्ष्यनिर्देशः, लिङ्गपरामर्शः साध्यव्याप्यहेतुमान् पक्ष इति साध्यव्याप्यहेतुः पक्षे इति च ज्ञानम्, यथा पर्वतो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमवान् पर्वत इति, वह्निव्याप्यधूमः पर्वते इति च ज्ञानम्। प्रथमं संयोगसम्बन्धेन वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यकनिश्चयरूपम्, द्वितीयं संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन पर्वतप्रकारकवह्निव्याप्यधूमविशेष्यकनिश्चयरूपम्, प्रथमपरामर्शात् पर्वतो वह्निमानित्यनुमितिः, तत्र संयोगसम्बन्धेन वह्निः प्रकारः पर्वतश्च विशेष्यः। द्वितीयपरामर्शात् पर्वते वह्निरित्यनुमितिः, तत्र संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन पर्वतः प्रकारो वह्निर्विशेष्यः। प्रथमे संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नं प्रति संयोगसम्बन्धावच्छिन्नवह्निव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयः कारणमिति। द्वितीये संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नं प्रति संयोमसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नपर्वतत्वावच्छिन्नप्रकारतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नविशेष्यताकनिश्चयः कारणमिति।

द्विविधादपि परामर्शात् पर्वतो वह्निमानित्येवानुमितिरित्यन्ये, तत्र संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नपर्वतत्वावच्छिन्नविषयतानिरूपितसंयोगसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नवह्निव्याप्यधूमत्वावच्छिन्नविषयताकनिश्चयत्वेन द्वयोः परामर्शयोः कारणत्वम्, संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वेन कार्यत्वमिति बोध्यम्।

लिङ्गपदकृत्यमाह—सादृश्यपरामर्शस्येति। अस्य निरास इत्यनेनान्वयः, परामर्शोऽनुमानमित्युक्तौ गोसदृशो गवय इति परामर्शेऽतिव्याप्तिः स्यात्। प्रत्यभिज्ञानस्येति अस्यापि निरास इत्यनेन सम्बन्धः, स एवायं देवदत्त इत्यादिप्रत्यभिज्ञानस्य पूर्वोत्तरकालवर्त्त्यभेदपरामर्शरूपत्वेन तत्रातिव्याप्तिः स्यात्। लिङ्गाभासपरामर्शस्येति वह्निव्याप्यजलवानिति वह्निव्याप्यधूमवान् ह्रद इत्यादिपरामर्शे चातिव्याप्तिः स्यात्। लिङ्गपदोपादाने चोक्तपरामर्शानां लिङ्गपरामर्शत्वाभावान्नातिव्याप्तिरित्यर्थः।

परामर्शपदोपादानप्रयोजनमाह—परामर्श इति द्वितीयलिङ्गदर्शनस्य ततः स्मृतेश्च निरास इति। परामर्शपदानुपादाने तत्स्थाने ज्ञानपदमुपादाय लिङ्गज्ञानमनुमानमित्युक्तौ पूर्वं महानसे वह्निसहचरिततया धूमदर्शनम्, ततः पर्वतसमीपं गतस्य पर्वते यद्धूमदर्शनं तद्द्वितीयं लिङ्गदर्शनम्, तत्रातिव्याप्तिः, द्वितीयलिङ्गदर्शनतो यद्वह्निव्याप्यधूमस्य स्मरणं तत्र चातिव्याप्तिः। परामर्शपदोपादाने च द्वितीयलिङ्गदर्शनव्याप्तिस्मरणयोः परामर्शरूपत्वाभावान्नातिव्याप्तिरित्यर्थः। किं लिङ्गं यत्सदृशलिङ्गाभासादिकं न भवतीत्याकांक्षायामाह—लिङ्गं तु निरूपाधिसाध्यसम्बन्धशालीति, पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वरूपपञ्चरूपोपपन्नमेवैतादृशं भवति। स्वरूपासिद्धात्मके हेत्वाभासे पक्षसत्त्वं नास्ति, विरुद्धे सपक्षसत्त्वं नास्ति, अनैकान्तिके विपक्षासत्त्वं नास्ति, बाधितेऽबाधितत्वं नास्ति, सत्प्रतिपक्षितेऽसत्प्रतिपक्षितत्वं नास्तीत्येवं पञ्चसु हेत्वाभासेषु निरुक्तपञ्चरूपोपपन्नत्वाभाववत्सु निरुपाधिसाध्यसम्बन्धशालित्वमपि न विद्यते। साध्येन सह हेतोरविनाभावसम्बन्धः सोपाधिके हेतौ न निरुपाधिकः, उपाधिगताया एव साध्यव्याप्तेस्तत्सम्बन्धाद्धेतौ प्रतीतेः, एतदनुसन्धानेनैव प्राचीनैरुक्तम्—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा॥ इति

लिङ्गलक्षणे निरूपाधीति विशेषणस्य प्रयोजनमुपदर्शयति—निरुपाधीति मैत्रतनयत्वादीनां निरास इति, आदिपदादार्द्रेन्धनवत्त्वादीनामुपग्रहः, साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्, पर्वतो धूमवान् वह्नेरित्यादावार्द्रेन्धनवत्त्वमुपाधिः, तत्र धूमरूपसाध्यव्यापकत्वं वह्निरूपसाधनाव्यापकत्वञ्च विद्यते। स श्यामो मैत्रतनयत्वादित्यत्र शाकपाकजत्वमुपाधिः। यद्यपि साध्यं श्यामत्वं काकादौ वर्त्तते न तत्र शाकपाकजत्वमिति न साध्यव्यापकत्वम्, तथापि पर्यवसितसाध्यव्यापकत्वं विवक्षितं, पर्यवसितं च साध्यं तत्र मैत्रतनयत्वरूपहेतुधर्मावच्छिन्नं, मैत्रतनयत्वविशिष्टश्यामत्वं च मैत्रतनय एव वर्तते, नतु काकादाविति भवति शाकपाकजत्वं मैत्रतनयत्वावच्छिन्नश्यामत्वव्यापकमिति। स्वव्यभिचारेण हेतौ साध्यव्यभिचारानुमानञ्चोपाधेः प्रयोजनम्। यथा पर्वतो धूमवान् वह्नेरित्यत्र वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वात् व्यापकव्यभिचारिणो व्याप्यव्यभिचारित्वस्यावश्यम्भावादिति सोपाधिर्हेतुरनैकान्तिकः। एवं स्वाभावेन साध्याभावानुमानमपि तत्प्रयोजनमिति बाधितोऽपि, बाधस्थले सत्प्रतिपक्षस्य नियमेन भावात् सत्प्रतिपक्षितोऽपीति निरुपाधीत्युपादानेन तेषां निरासः।

साध्यसम्बन्धशालीत्यस्य कृत्यमाह—साध्यसम्बन्धशालीति साध्यरहितानां धर्माणां निरुपाधीनां निरास इति। साध्यरहितानामित्यस्य साध्यसंबन्धरहितानामित्यर्थः। साध्यसम्बन्धश्च तादात्म्यतदुत्पत्त्यादिरविनाभावनिबन्धनः। अन्यत् सुगमम्। अनुमितिः व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानरूपा पक्षविशेष्यकसाध्यप्रकारकज्ञानात्मिका पर्वतो वह्निमानित्याकारा। अस्य अनुमानप्रमाणस्य, फलं प्रयोजनम्।

उपमानप्रमाणं लक्षयति—

**अकृतसमयसंज्ञास्मरणसहायं तत्समभिव्याहृतवाक्यार्थप्रत्यभिज्ञानप्रत्यक्षमुपमानम्। अकृतसमयेति कृतसमयानां तथाविधप्रत्यक्षनिरासः, संज्ञास्मरणेति विस्मृतोपलब्धसंज्ञानां तथाविधप्रत्यक्षनिरासः। तत्समभिव्याहृतवाक्यार्थेति केवलसंज्ञास्मृतिमतां व्युदासः। प्रत्यभिज्ञेति तथाविधस्मरणमात्रव्युदासः। प्रत्यक्षमिति पुनर्वाक्यादेव प्रत्यभिज्ञानस्य निरासः। उभाभ्यामनुसंधाननिरासः। वाक्यार्थस्तु क्वचित्साधर्म्यं, क्वचिद्वैधर्म्यमिति नाव्याप्तिः। अस्य फलं समयपरिच्छित्तिः।**

न कृतोऽकृतः अकृतः समयोऽयमर्थोऽस्य पदस्य वाच्यः इदम्पदममुमर्थं बोधयतु इत्येवं रूपः सङ्केतो यस्याः साऽकृतसमया, अकृतसमया चासौ संज्ञा च अकृतसमयसंज्ञा, तस्या यत् स्मरणं तत्सहायं तत्सहकृतम् अकृतसमयगवयपदस्मरणसहकृतम्, अत्र अकृतसमयस्य पुरुषस्य यत् संज्ञास्मरणं तत्सहायमित्यर्थः सुगमः। तत्समभिव्याहृतं निरुक्तसंज्ञासमभिव्याहृतं यद्वाक्यं गोसदृशो गवय इति तदर्थस्य गोसदृशगवयरूपार्थस्य यत् प्रत्यभिज्ञानप्रत्यक्षं गोसदृशोऽयं गवय इत्याकारकं तदुपमानप्रमाणमित्यर्थः। अकृतेत्यादि प्रत्यक्षमित्यन्तं लक्षणोपदर्शनम्। उपमानमिति लक्ष्यकथनम्। अकृतसमयस्य प्रयोजनमाह—अकृतसमयेतीति। कृतः समयः गवयादिपदसंकेतो यैस्तेषां पुरुषाणां निरुक्तगवयपदसमभिव्याहृतवाक्यार्थस्य गोसदृशोऽयं गवय इति यत् प्रत्यभिज्ञानप्रत्यक्षं तत्रोपमानलक्षणातिव्याप्तिः अकृतसमयेत्यस्यानुपादाने। तदुपादाने तु तेषामकृतसमयत्वाभावान्नातिव्याप्तिरित्यर्थः। सङ्केतपरिच्छित्तिरुपमानस्य प्रयोजनं कृतसमयानां सङ्केतपरिच्छित्तिः पूर्वं यातैवेत्यतस्तत् तथाविधप्रत्यक्षस्यालक्ष्यत्वमिति बोध्यम्।

संज्ञास्मरणकृत्यमाह—संज्ञास्मरणेतीति, पूर्वं गोसदृशो गवय इति श्रुतं किन्तु विस्मृतं यैस्तेषां विस्मृतोपलब्धसंज्ञानां पुरुषाणां गोसदृशोऽयं गवय इति प्रत्यभिज्ञान-

प्रत्यक्षेऽतिव्याप्तिनिरासार्थं संज्ञास्मरणसहायमित्युक्तमित्यर्थः। तदानीमेव पुरुषान्तरोच्चारितगवयपदश्रवणतस्तत्समभिव्याहारो वाक्ये समस्तीत्येतदर्थमेवोपलब्धेति पदमुपात्तम्। तत्समभिव्याहृतवाक्यार्थोपादानप्रयोजनमाह—तत्समभिव्याहृतवाक्यार्थेतीति। केवलेति तत्समभिव्याहृतवाक्यार्थज्ञाननिरपेक्षेत्यर्थः। व्युदास इति तत्पुरुषज्ञानस्योपमानलक्षणातिव्याप्तिनिरास इत्यर्थः। प्रत्यभिज्ञानपदोपादानप्रयोजनमुपदर्शयति—प्रत्यभिज्ञेति, प्रत्यभिज्ञानानुपादाने तद्विशेषकं प्रत्यक्षमप्यनुपात्तमेव स्यात्, एवञ्च गोसदृशो गवय इति वाक्यार्थस्मरणेऽतिव्याप्तिः स्यात्। तद्वारणार्थं प्रत्यभिज्ञानपदोपादानमित्यर्थः।

प्रत्यक्षपदकृत्यमाह—प्रत्यक्षमितीति, वाक्यादेव गोसदृशोऽयमिति वाक्यादेव। गोसदृशस्येदमर्थेन सहाभेदावगाहित्वादेवोक्तवाक्यार्थज्ञानस्य प्रत्यभिज्ञानत्वमिति बोध्यम्। निरास इत्यस्योपमानलक्षणातिव्याप्तिनिरास इत्यर्थः। उभाभ्यां प्रत्यभिज्ञानपदप्रत्यक्षपदाभ्याम्, अनुसंधानं वाक्यार्थानुसन्धानं तस्य व्युदासः, तथानुसन्धानस्य प्रत्यभिज्ञानप्रत्यक्षत्वाभावादित्यर्थः। वाक्यार्थः क इत्याकांक्षायामाह—वाक्यार्थस्त्विति, क्वचित् गोसदृशो गवय इत्यादौ, क्वचिद् वैधर्म्यं महिषीसमूहे एकस्या गोरवस्थितौ, एतासां मध्ये यैताभ्यो विलक्षणा सा गौरिति गोशब्दसंकेतपरिच्छित्तिफले महिषीभ्यो विशदृशी इयमित्युपमाने, साधर्म्यवैधर्म्ययोर्वाक्यार्थत्वलक्षणैकधर्मवत्त्वेनोपादानात् साधर्म्यवैधर्म्यज्ञानयोरुभयोरपि संग्रहान्नैकत्राव्याप्तिरित्यर्थः। अस्य निरुक्तलक्षणोपमानप्रमाणस्य, फलं प्रयोजनम्, समयपरिच्छित्तिः संज्ञासंज्ञिसंबन्धसङ्केतपरिच्छित्तिः सैवोपमितिरिति।

शब्दप्रमाणं लक्षयति—

**वाक्यजप्रमासाधकतमः शब्दः। वाक्येति आकांक्षाविरहिणां पदानां व्युदासः, जेति वाक्यविषयश्रौत्रप्रत्यक्षनिरासः। प्रमेति पदार्थस्मरणस्य अनाप्तवचसश्च निरासः। साधकेति फलनिरासः। तम इत्ययमसावश्व इति प्रत्यक्षनिरासः। अर्थप्रमितिरस्य फलम्।**

वाक्यजप्रमासाधकतम इति लक्षणनिर्देशः। शब्द इति लक्ष्यनिर्देशः। यत् पदं विना यस्य पदस्य नान्वयबोधजनकत्वं तयोः पदयोः पूर्वापरीभाव आकांक्षा। स्वाव्यवहितपूर्ववर्त्तित्वस्वाव्यवहितोत्तरवर्त्तित्वान्यतरसम्बन्धेन तत्पदविशिष्टतत्पदत्वमाकांक्षेति, स्वन्तनीलपदं विना स्वन्तघटपदं स्वन्तघटपदं विना स्वन्तनीलपदञ्चाभेद-

सम्बन्धेन नीलप्रकारकघटविशेष्यकान्वयबोधलक्षणं शाब्दबोधं न जनयति, किन्तु स्वन्तनीलपदसमभिव्याहृतस्वन्तघटपदमेव नीलो घट इत्येवं रूपं निरुक्तशाब्दबोधजनकमिति, साकांक्षपदसमुदायो वाक्यम्, तज्जन्या या प्रमा तस्याः साधकतमः। प्राचां मते ज्ञायमानं पदं नव्यमते पदज्ञानं शब्दप्रमाणमित्यर्थः।

अत्र पदपदार्थयोः सम्बन्धो वृत्तिः। स च शक्तिलक्षणाभेदेन द्विविधः, व्यञ्जनास्थलेऽनुमानमेव भवति इति। न व्यंजनावृत्तिरक्षपादानुनता, शक्तिश्च अयमस्मात् पदाद्बोद्धव्य इति, इदं पदममुमर्थं बोधयत्विति सङ्केत ईश्वरेच्छारूपः।

शक्तम् पदम्, तच्चतुर्विधम्, रूढं यौगिकं योगरूढं यौगिकरूढमिति भेदात्, तत्र समुदायशक्तिः रूढिः, तयार्थबोधकं रूढं घटकलसादिपदम्। अवयवशक्तिर्योगः, तयाऽर्थबोधकं यौगिकम्, यथा पाचकपाठकादिपदम्। यत्र समुदायशक्तिप्रतिपाद्येऽर्थेऽवयवशक्त्यर्थस्यापि भानं तद्योगरूढम्, यथा पङ्कजपदम्, तस्य समुदायशक्तिप्रतिपाद्ये पद्मरूपार्थेऽवयवशक्तिप्रतिपाद्यस्य पङ्कजनिकर्त्तुरप्यन्वयः पङ्कजनिकर्त्तृ पद्मेति तत उपस्थितिः। यस्य समुदायशक्तिरन्यस्मिन्नर्थे तदन्यस्मिंश्चावयवशक्तिः, कदाचित् समुदायशक्त्युपस्थापितार्थस्य भानं कदाचिदवयवशक्त्युपस्थापितार्थस्येत्येवं पृथगेव भानम्, तद्यौगिकरूढम्, यथा उद्भिदादिपदम्। समुदायशक्त्योद्भित्पदेनोद्भिन्नामकस्य यागस्य बोधः, ऊद्ध्वं भित्वा जातस्य वृक्षगुल्मादेरवयवशक्त्या तेन पदेन बोधः। शक्यसम्बन्धो लक्षणा। यत्रान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा प्रतिसन्धीयते, तत्र लक्षणयाऽन्वयबोधः। लक्षणयाऽर्थोपस्थापकं पदं लाक्षणिकम्, लाक्षणिकं पदं नानुभावकम्, तदर्थान्वयबोधे शक्तं पदान्तरं कारणमित्येके। तदपरे न मन्यन्ते। यत्र कुमतिः पशुरित्यादावेकमपि शक्तं पदं नास्ति तत्रान्वयबोधो लक्षणयैवेति, जहत्स्वार्थाऽजहत्स्वार्था निरूढाऽऽधुनिकेत्येवं लक्षणा चतुर्विधा। लक्षितलक्षणाऽप्यस्ति द्विरेफद्विकपदतस्तयैवान्वयबोधात्, उक्तञ्च—

जहत्स्वार्थाऽजहत्स्वार्था निरूढाधुनिकी तथा।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा॥

इति। पदज्ञानं करणम्, वृत्त्या पदजन्यपदार्थोपस्थितिर्व्यापारः, शाब्दबोधः फलमिति सिद्धान्तः। अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः, अभेदान्वयस्थले विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमिति नियमः। वेदाः प्रमाणमित्याद्यनुरोधेन यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया विशेषणवाचकपदोत्तरविभक्त्याऽविवक्षितत्वम्, तत्र विशेष्यविशेषणवाचकपदयोः समान-

वचनकत्वमित्येवमुक्तनियमपरिस्कारः। पदार्थः पदार्थनान्वेति, नतु पदार्थैकदेशेनेत्यपि नियमः। एकत्र विशेषणतयोपस्थितस्य नान्यत्र विशेषणतयाऽन्वय इत्यादिनियमा अप्यत्रानुसन्धेयाः। न्यायमते सति सम्भवे प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधः।

वाक्यजेत्यादौ वाक्यपदोपादानप्रयोजनमुपदर्शयति—वाक्येतीति, आकांक्षाविरहिणां शाब्दबोधोपयोगिनिरुक्ताकांक्षारहितानाम्। जेत्युपादानस्य फलमुपदर्शयति—जेतीति, वाक्यत्वेन वाक्यजन्यत्वमत्र विवक्षितं, तेन विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन विषयस्य कारणत्वमिति नियमतः वाक्यप्रत्यक्षे विषयविधया वाक्यस्य कारणत्वेन वाक्यजेत्युपादानेऽप्युक्तदोषस्य तादवस्थ्यमित्यस्य न प्रसंगः। प्रमापदकृत्यमाह—प्रमेतीति, पदार्थस्मरणस्येति वाक्यघटकप्रत्येकपदजन्यार्थस्मरणसमूहस्य वाक्यजन्यतया तत्साधकतमस्य पूर्वानुभवस्य शब्दप्रमाणानात्मकस्यालक्ष्यतया तत्रातिव्याप्तिवारणाय प्रमापदोपादानमित्यर्थः। एवं वाक्यमनाप्तोच्चारितवाक्यमपि तज्जन्यं भ्रमात्मकं ज्ञानं तत्साधकतमस्तदेव वाक्यं तत्रातिव्याप्तिवारणाय प्रमेत्युपात्तमित्याह—अनाप्तवचसश्चेति, रागद्वेषादिदोषक्षय आप्तिस्तद्वान् पुरुषो यथादृष्टमर्थं ब्रूते, तदन्योऽनाप्तस्तदुच्चरितवचसश्चेत्यर्थः। यदि साधकपदं नोपादीयते तदा तमःपदं तन्नियतमनुपात्तमेव स्यात्, तथा च वाक्यजप्रमा शब्द इति लक्षणवाक्यं वाच्यमिति शब्दप्रमाणफले शाब्दप्रमायामतिव्याप्तिस्तद्वारणाय साधकपदोपादानमित्याह—साधकेति फलनिरास इति। प्रत्यक्षात्मकवाक्यार्थज्ञानजन्यवाक्यजप्रमाजनके प्रत्यक्षेऽतिव्याप्तिवारणाय तम इत्युक्तमित्याह—तम इति, अयमसावश्व इति प्रत्यक्षनिरास इति। अर्थप्रमितिः एकपदार्थेऽपरपदार्थान्वयबोधप्रमा, अस्य शब्दप्रमाणस्य, फलं प्रयोजनम्।

सूत्रे प्रमाणानन्तरमुद्दिष्टस्य प्रमेयपदार्थस्य लक्षणमुपदर्शयति—

**प्रमाणविषयः प्रमेयम्। मुमुक्षून् प्रति यन्मिथ्याज्ञायमानं साक्षादनुकूलप्रतिकूलयो रागद्वेषहेतुः तत् प्रमेयमित्येकम्। सम्यग् ज्ञायमानं यत् साक्षात् संसारबीजं निकृन्तति तद् द्वितीयम्। तच्च द्वादशविधम् परिसंख्यानात्। तत्र ज्ञानाद्यधिकरणमात्मा। ज्ञानेति गुणान्तराधिकरणानां पृथिव्यादीनां निरासः। आदीति लक्षणान्तरसूचनम्। अधिकरणमिति ज्ञानस्य व्युदासः। ज्ञानसमवायिकारणमिति न कर्तव्यम् ईश्वराव्यापकत्वात्।**

प्रमाणविषय इति लक्षणनिर्देशः। प्रमेयमिति लक्ष्यनिर्देशः। प्रमाणविषय इति प्रमाविषयपरम्, आत्मशरीरेन्द्रियादिषु द्वादशपदार्थेषु प्रमेयत्वं पारिभाषिकम्, तेनात्मशरीरादिव्यतिरिक्तेषु न प्रमेयलक्षणातिव्याप्तिः। परिभाषा चाक्षपादस्य सङ्केतो द्विधा प्रवर्तते, तन्निमित्तं क्रमेणोपदर्शयति—मुमुक्षून प्रतीति, यत् आत्मशरीरेन्द्रियादिकं, मिथ्याज्ञायमानं शरीराद्यभिन्नतया ज्ञानविषय आत्मा, आत्माभिन्नतया ज्ञानविषयः शरीरादि; साक्षादिति हेतुरित्यनेनान्वेति, अनुकूलप्रतिकूलयोरिष्टानिष्टयोः सुखदुःखयोः तत्साधनयोश्च, रागद्वेषहेतुः कामक्रोधजनकम्, तत् आत्मशरीरेन्द्रियादिकं प्रमेयमित्येकं परिभाषानिमित्तम्। सम्यग् ज्ञायमानं आत्मा शरीरेन्द्रियादिभिन्नः शरीरेन्द्रियादिकमात्मभिन्नमित्येवं यथार्थज्ञानविषयः सत्, साक्षादिति निकृन्ततीत्यनेनान्वेति, संसारबीजं इहलोकपरलोकसंसरणलक्षणभवजनकं, मिथ्याज्ञानं निकृन्तति समूलमुच्छिनत्ति। तत् विभिन्नतया ज्ञायमानमात्मशरीरेन्द्रियादिकं तत्त्वम् प्रमेयमित्येवं द्वितीयं परिभाषानिमित्तमित्यर्थः। तच्च निरुक्तलक्षणं प्रमेयतत्त्वं च, द्वादशविधं द्वादशसंख्याकम्। तत्र प्रमाणमाह—परिसंख्यानात् इति, महर्षिणा गौतमेन।

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्।

न्या. सू. १.१.९

इत्येवं सूत्रेण परिगणनादित्यर्थः। तत्र द्वादशप्रमेयेषु मध्ये, ज्ञानाद्यधिकरणमात्मा, ज्ञानाद्यधिकरणमिति लक्षणवचनम्, आत्मेति लक्ष्यकथनम्, ज्ञानाद्यधिकरणमित्यस्य समवायसम्बन्धेन ज्ञानाश्रय इत्यर्थः। तेन कालिकादिसम्बन्धेन ज्ञानाद्याश्रये कालादौ नातिव्याप्तिः। एतच्च लक्षणं जीवेश्वरसाधारणम्। तदुभयसाधारणमात्मत्वजातिमत्त्वं च लक्षणं न सम्भवति, सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्धायाः आत्मत्वजातेरीश्वरेऽभावात्। तत्र जन्यज्ञानाधिकरणं जीवः, प्रतिशरीरं भिन्नो विभुर्नित्यश्च, नित्यज्ञानाधिकरणमीश्वरः विभुर्नित्य एको जगत्कर्त्ता च। ज्ञानपदोपादानप्रयोजनमाह—ज्ञानेतीति, गुणान्तरेति रूपादिगुणेत्यर्थः। ज्ञानादि इत्यादिपदेन प्रयत्नेच्छयोरुपग्रहः, तेन ज्ञानाधिकरणमात्मा, प्रयत्नाधिकरणमात्मा, इच्छाधिकरणमात्मेति लक्षणत्रयमात्मनः प्रतिपादितं भवतीत्याह—आदीति लक्षणान्तरसूचनमिति। ज्ञानमात्मेत्युक्तौ ज्ञानेऽतिव्याप्तिरसम्भवश्चात्ममात्रस्य ज्ञानानात्मकत्वादतोऽधिकरणमित्युक्तमित्याह—अधिकरणमिति ज्ञानस्य व्युदास इति। ज्ञानाद्यधिकरणमात्मेति स्थाने ज्ञानादिसमवायिकारणमात्मेत्युक्तावीश्वरज्ञानादेर्नित्यत्वान्न ज्ञानादिकं प्रति समवायिकारणमीश्वर इति तत्राव्याप्तिरतस्तथा नोपदर्शितमित्याह—ज्ञानसमवायिकारणमिति न कर्तव्यम्, ईश्वराव्यापकत्वादिति।

द्वितीयं शरीरलक्षणं प्रमेयतत्त्वं लक्षयति—

**प्रयत्नवदात्मसंयोगासमवायिकारणक्रियाश्रयः शरीरनिरपेक्षोऽन्त्यावयवि शरीरम्। प्रयत्नवदात्मेति अदृष्टवदात्मसंयोगासमवायिकारणक्रियासाधारण्याद्दहनपवनादीनां निरासः। क्रियाश्रय इति प्रयत्नवदात्मेश्वरपरमाण्वादिसंयोगासमवायिकारणक्रियासंयोगाधाराणां द्व्यणुकादीनां निरासः। शरीरनिरपेक्ष इति प्राणरूपवायोर्निरासः। अन्त्यावयवीति करचरणादीनाम्, सोऽयं चेष्टाश्रय इत्यस्यार्थः, सर्वेन्द्रियाधिष्ठानं शरीरमिति द्वितीयम्। सर्वेन्द्रियेति एकैकाधिष्ठानगोलकादिनिरासः। अधिष्ठानमिति सर्वेन्द्रियनिवृत्त्यर्थम्, सोऽयमिन्द्रियाश्रय इत्यस्यार्थः, यमन्त्यावयविनमाश्रितोऽर्थान् भुङ्क्ते तच्च शरीरमिति तृतीयम्। अन्त्येति करचरणादीनां व्युदासः। अवयविनमिति मतिनिरासः। अर्थान् भुङ्क्ते इति घटादीनां परमाण्वन्तानां निरासः। सोऽयमर्थाश्रय इत्यस्यार्थः।**

प्रयत्नवदात्मेत्यादि अन्त्यावयवीत्यन्तं लक्षणनिर्देशः। शरीरमिति लक्ष्योक्तिः। शरीरं शरीरमित्यनुगतप्रतीतिसिद्धं शरीरत्वं सामान्यं तद्वच्छरीरमिति तु न युक्तम्, पृथिवीत्वाभाववति तैजसशरीरे शरीरत्वं शरीरत्वाभाववति घटादौ पृथिवीत्वं तयोश्च मानुषादिशरीरे सत्त्वमित्येवं पृथिवीत्वादिना साङ्कर्येण शरीरत्वस्य जातिरूपत्वासम्भवादतः प्रयत्नेत्यादिलक्षणादरः।

चेष्टेन्द्रियार्थाश्रयः शरीरम्। न्या. सू. १.१.११

इति न्यायसूत्रोक्तितः चेष्टाश्रयः इन्द्रियाश्रयोऽर्थाश्रयः शरीरमिति लक्षणत्रयं शरीरस्य। तत्र चेष्टाश्रयः शरीरमिति प्रथमलक्षणं परिष्कृत्येदं लक्षणम्, प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा, तदाश्रयः शरीरनिरपेक्षोऽन्त्यावयवि च शरीरं भवतीत्येतल्लक्षणसमन्वयः, प्रयत्नवदित्यस्यानुपादाने आत्मसंयोगोऽदृष्टवदात्मसंयोगोऽपि तदसमवायिकारणिका क्रिया दहनपवनादीनामपीति तेष्वतिव्याप्तिवारणाय प्रयत्नवदित्यस्योपादानमित्याह—प्रयत्नवदात्मेतीति। क्रियाश्रय इत्यस्य प्रयोजनमाह—क्रियाश्रय इतीति। कारणक्रियासंयोगेत्यस्य स्थाने कारणसंयोगेति पाठः समीचीनः प्रयत्नवदात्मेश्वरस्तेन सह परमाण्वादीनामवयवानां यः क्रियाजन्यः संयोगस्तदसमवायिकारणको योऽवयविनामक्रियाणां द्व्यणुकादीनामीश्वरात्मना संयोगः संयोगजसंयोगस्तदाधाराणां द्व्यणुकादीनां शरीरलक्षणातिप्रसंगवारणाय क्रियाश्रय

इत्युक्तमित्यर्थः । प्रयत्नवदात्मप्राणसंयोगात् प्राणक्रिया तदसमवायिकारणिका तदाश्रयत्वं प्राणेष्वतिप्रसक्तमिति तद्वारणाय शरीरनिरपेक्ष इति । प्राणक्रिया तु शरीरसापेक्षैवेति नातिव्याप्तिरित्याह—शरीरनिरपेक्ष इति । प्राणरूपवायोर्निरास इति । उक्तक्रियाश्रयत्वं शरीरावयवे करचरणादावप्यस्ति तत्रातिव्याप्तिवारणायान्त्यावयवीत्युपात्तमित्याह—अन्त्यावयवीति करचरणादीनामिति निरास इत्यनुषज्यते । प्रथमलक्षणपरिस्कारोऽयमित्याह—सोऽयमिति । इन्द्रियाश्रयः शरीरमिति द्वितीयलक्षणं परिस्कृत्य दर्शयति—सर्वेन्द्रियाधिष्ठानं शरीरमिति द्वितीयमिति । द्वितीयं शरीरलक्षणमिति शेषः । सर्वेषामिन्द्रियाणामाश्रयः शरीरमित्यर्थः । सर्वेन्द्रियोपादानकृत्यमाह—सर्वेन्द्रियेतीति । अधिष्ठानपदोपादानप्रयोजनमाह—अधिष्ठानमितीति । सर्वेन्द्रियं शरीरमित्युक्तौ शरीरमात्रेऽसम्भवः सर्वेन्द्रियेष्वतिव्याप्तिश्चेत्यतस्तद्वारणाय सर्वेन्द्रियाधिष्ठानमित्युक्तमित्यर्थः । द्वितीयलक्षणार्थमुपसंहरति—सोऽयमिति । अर्थाश्रयः शरीरमिति तृतीयलक्षणं परिष्कृत्य दर्शयति—यमिति । यमन्त्यावयविनमवच्छेदकं कृत्वा पुरुषो जीवात्माऽर्थान् रूपरसगन्धस्पर्शादीन् भुङ्क्ते तत्साक्षात्कारलक्षणभोगवान् भवति, तच्चेति चकारादाद्यद्वितीयलक्षणसमुच्चयः । तृतीयं तृतीयशरीरलक्षणमित्यर्थः । अन्त्यपदोपादानकृत्यमाह—अन्त्येतीति । करचरणादिकमाश्रित्यापि रूपादिमदर्थान् भुङ्क्ते पुरुष इति करचरणादिष्वतिव्याप्तिस्तद्वारणायान्त्यपदोपादानमित्यर्थः । अन्त्यावयवित्वञ्चावयवानात्मकत्वे सत्यवयवित्वम् । अवयविपदानुक्तौ तद्विशेषणस्यान्त्यस्याप्यनुक्तिरेवञ्च मतिं ज्ञानञ्चाश्रित्य पुरुषोऽर्थान् भुङ्क्ते इति ज्ञानेऽतिव्याप्तिः स्यात् तद्वारणायावयविपदोपादानमित्याह—अवयविनमिति मतिनिरास इति । यमाश्रितः पुरुष इत्येतावन्मात्रोक्तौ घटाद्यारभ्य परमाणुपर्यन्तं व्यापकत्वादाश्रयति पुरुष इति तेष्वतिव्याप्तिस्तद्वारणायार्थान् भुङ्क्ते इत्यस्योपादानमित्याह—अर्थान् भुङ्क्ते इतीति । तृतीयलक्षणमुपसंहरति—सोऽयमिति ।

इन्द्रियात्मकं तृतीयं प्रमेयतत्त्वं लक्षयति—

**शरीरसंयुक्तं साक्षात्कारिप्रमासाधनमतीन्द्रियमिन्द्रियम् । शरीरसंयुक्तमिति इन्द्रियसंयोगादीनामतीन्द्रियाणां प्रमासाधनानां निरासः । प्रमासाधनमिति शरीरसंयोगादीनामतीन्द्रियाणां च परमाण्वादीनां विषयाश्रयाणां निरासः ।**

शरीरसंयुक्तमित्यादि अतीन्द्रियमित्यन्तं लक्षणनिर्देशः । इन्द्रियमिति लक्ष्यकथनम् ।

चक्षुरादिकं शरीरसंयुक्तं साक्षात्कारिप्रमायाः रूपादिविषयिण्याः साधनम्, अतीन्द्रियञ्चेति तत्र लक्षणसमन्वयः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वमिति लक्षणं मुक्तावल्यादिग्रन्थे निष्टङ्कितम्। तत्रैव च इन्द्रियत्वं न जातिः, पृथिवीत्वादीना सांकर्यात् पृथिवीत्वाद्यभाववति रसनादाविन्द्रियत्वम्, इन्द्रियत्वाभाववति घटादौ पृथिवीत्वादिकम्, तयोश्च घ्राणादीन्द्रिये सत्त्वमिति सांकर्यमिति दर्शितम्। प्रकृतलक्षणे शरीरसंयुक्तमिति विशेषणानुपादाने इन्द्रियार्थसंयोगेन्द्रियसंयुक्तसमवायादीनां लौकिकप्रत्यक्षागोचरेन्द्रियप्रतियोगिकत्वेनातीन्द्रियाणां घटरूपादिप्रत्यक्षप्रमाजनकानां साक्षात्कारिप्रमासाधनत्वे सत्यतीन्द्रियत्वरूपेन्द्रियलक्षणाक्रान्तत्वेन तेष्वतिव्याप्तिः स्यात्, तदुपादाने त्विन्द्रियसंयोगादीनां शरीरसंयुक्तत्वाभावान्नातिव्याप्तिरित्याह—शरीरसंयुक्तमिति। प्रमासाधनमिति विशेषणप्रयोजनमाह—प्रमासाधनमितीति। शरीरसंयोगादीनामित्यस्य स्थाने शरीरसंयुक्तानामिति पाठो युक्तः। प्रमाविशेषणस्य साक्षात्कारीत्यस्य प्रमानुपादानेऽनुपादानमित्याशयेनेत्थमुक्तिः। इन्द्रियत्वेनाभिमतानां चक्षुरादीनामिन्द्रियत्वे तदवयवभूतानां परमाण्वादीनां तत्त्वं सम्भवेदपीत्यत उक्तं—विषयाश्रयाणामिति तथाभूतानां न कथंचिदपि इन्द्रियत्वमित्यभिसन्धिः।

अर्थादिरूपाणां प्रमेयतत्त्वानां लक्षणानि क्रमेणोपदर्शयति—

**प्रतीतिविषयतया भोगसाधनमर्थः। प्रतीतिविषयतयेति शरीरेन्द्रियादीनां निरासः। भोगसाधनमित्यात्मनः। अर्थप्रकाशो बुद्धिः। अर्थेति निर्विषयबुद्धित्वादिमतनिरासः। प्रकाश इत्यप्रतीतिरूपनिराकरणम्। सर्वात्मविशेषगुणसाधनं मनः। प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाणां तु सुगमानि शास्त्रे लक्षणानि, यद्यपि प्रमेयान्तरमस्ति तथाप्येतावदेवोक्तम्, अपवर्गोपयोगात्।**

प्रतीतिविषयतया भोगसाधनमिति लक्षणम्। अर्थ इति लक्ष्यम्। ज्ञाततया सुखदुःखजनकं रूपरसगन्धस्पर्शशब्दा दिव्यादिव्यभेदेन द्विविधा अर्थाः। तत्र दिव्यास्ते सुखरूपभोगस्य ज्ञाततया जनकमिति। अदिव्या अमनोहरास्ते दुःखरूपभोगस्य ज्ञाततया जनकमिति। शरीरेन्द्रियादीनां स्वरूपसत्तया सुखदुःखजनकानामतिव्याप्तेर्निरासाय प्रतीतिविषयतयेत्यस्योपादानमित्याह—प्रतीतिविषयतयेतीति। स्वरूपसत्तयाऽऽत्माऽपि भोगसाधनमिति तत्रातिव्याप्तिवारणमपि तस्य प्रयोजनमित्याह—भोगसाधनमित्यात्मन इति। निरास इत्यनुषज्यते। अथवा रूपादयोऽर्थाः कस्य भोगसाधनमित्याकांक्षानिवृत्तये इदमुक्तम्। आत्मनो जीवस्य सुखदुःखसाधनमित्यर्थः।

बुद्धिरूपप्रमेयतत्त्वं लक्षयति—अर्थप्रकाशो बुद्धिरिति। अर्थप्रकाश इति लक्षणम्। बुद्धिरिति लक्ष्यम्। निर्विषयमेव ज्ञानं बाह्यार्थाभावादित्यभ्युपगच्छतो योगाचारस्य बौद्धविशेषस्य मतं निरसयितुमर्थेत्युक्तमित्याह—निर्विषयतेति। बुद्धित्वादीत्यस्य स्थाने बुद्धिवादीति पाठः समुचितः। अज्ञानरूपाणां घटपटादिजडानां निरासाय प्रकाश इत्युक्तमित्याह—प्रकाश इतीति।

मनोरूपं प्रमेयं लक्षयति—सर्वात्मेति। सर्वात्मविशेषगुणसाधनमिति लक्षणम्। मन इति लक्ष्यम्। यत्किञ्चिदात्मविशेषगुणस्य रूपादिप्रत्यक्षस्य साधनं चक्षुरादिकमपि तत्रातिव्याप्तिवारणाय सर्वेत्यात्मविशेषगुणस्य विशेषणम्। प्रवृत्त्यादिरूपाणां प्रमेयाणां लक्षणानि शास्त्रे प्रतिपादितानि सुगमानि तत एवावसेयानि नात्र प्रयासो विहित इत्याह—प्रवृत्तीत्यादि। कथं प्रमेयान्तराणां सतामपि न प्रमेयतया परिगणनम्, किन्तु प्रमाणादेर्द्वादशविधस्यैवेत्याकांक्षायामाह—यद्यपीति। अपवर्गोपयोगात् मोक्षोपयुक्तत्वात्, एतावन्त एव प्रमेयाः नातोऽधिका प्रमेयाः सन्तीति न वाच्यं पदार्थमात्रस्य प्रमात्मकज्ञानविषयत्वेन प्रमेयत्वादित्याशयेन पदार्थसामान्यलक्षणं तत्परिसंख्यानं, परिगणितानां लक्षणानि च भावयति वैशेषिकानुमतानि—

**तथाहि विधायकप्रमाणगोचरः पदार्थ इति पदार्थसामान्यलक्षणम्। स च षोढा। समानतन्त्रपरिसंख्यानात्। तत्र गुणवद्द्रव्यम्। गुणवदित्यनेनैव सकलसजातीय-विजातीयनिरासः। क्रियावदिति प्रादेशिकम्। समवायिकारणमित्यपि लक्षणम्। सामान्यवानगुणोऽकर्मरूपो गुणः। सामान्यवानिति सामान्यविशेषसमवायाभावनिरासः। अगुण इति च द्रव्याणाम्। अकर्म इति कर्मणः। आद्यविभागासमवायिकारणं कर्म। आद्यविभागेति द्वितीयविभागासमवायिकारणस्य प्रथमविभागस्य निरासः। असमवायिकारणमिति द्रव्यादीनाम्। नित्यमेकमनेकसमवायि सामान्यम्। नित्यमिति संयोगादिनिरासः। एकमिति सलिलाद्यनेकपरमाणुसमवेतानेकसितरूपादीनां निरासः। अनेकसमवायीति प्रत्येकं नित्यानां द्रव्याणाम्। एकद्रव्याः स्वरूपसन्तो विशेषाः। एकद्रव्या इति सामान्यसमवाययोर्निरासः। स्वरूपसन्त इति गुणकर्मणां, द्रव्यस्य चाप्रसंग एव। नित्यप्राप्तिः समवायः। नित्येति संयोगनिवृत्तिः। प्राप्तिरिति तदतिरिक्तस्येति। अत्र चान्तर्गणिको भेदः।**

तथाहीति, विधायकप्रमाणगोचर इति लक्षणकथनं, पदार्थ इति लक्ष्यनिर्देशः। अभावस्य निषेधप्रमाणगोचरस्य पदार्थपरिसंख्यानेऽनुपदेशात्तत्रोक्तलक्षणाभावेऽपि न क्षतिः, पदार्थसामान्यलक्षणमित्यस्य भावपदार्थसामान्यलक्षणमित्यर्थः। स च भावपदार्थश्च, षोढ़ा षड्विधः, द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात्, कारणाभावात् कार्याभाव [ वै. सू. २. ] इत्यादिसूत्रप्रामाण्यादभावपदार्थोऽपि वैशेषिकसम्मत एव, किन्तु विधिमुखेन न प्रतीयत इति न तस्य पदार्थतया परिगणनमित्यभिप्रायकम्। षड्विधत्वे प्रमाणमुपदर्शयति—समानतन्त्रपरिसंख्यानादिति, समानतन्त्रे वैशेषिकदर्शने 'धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निश्रेयसाधिगम [ १. १., ४ ] इति सूत्रेण पदार्थानां षड्विधानामेव परिगणनादित्यर्थः। तत्र द्रव्यादिषु मध्ये, गुणवदिति लक्षणम्, द्रव्यमिति लक्ष्यम्। समवायसम्बन्धेन गुणाधिकरणत्वं द्रव्यस्य लक्षणम्। तच्च सामान्यवत्त्वेन सकलसजातीयेभ्यो गुणकर्मभ्यो विजातीयेभ्यः सामान्यविशेषसमवायेभ्यो व्यावर्त्तयति द्रव्यमिति भवति लक्षणम्, लक्षणकृत्यस्य सजातीयविजातीयव्यवच्छेदस्य सद्भावादित्याह—गुणवदित्यनेनैव सकलसजातीयविजातीयनिरास इति। एवकारेण क्रियावदित्यस्य द्रव्यसामान्यलक्षणत्वव्यवच्छेदः, मूर्त्तानां क्रियावत्त्वं लक्षणं सम्भवतीत्याह—क्रियावदिति प्रादेशिकमिति, मूर्त्तामूर्त्तभेदेन द्विविधस्य द्रव्यस्यैकदेशे मूर्त्ते प्रवर्त्तत इति प्रादेशिकमित्यर्थः। समवायसम्बन्धेन कार्यमात्रं प्रति तादात्म्यसम्बन्धेन द्रव्यं कारणमिति समवायसम्बन्धेन कार्यमात्रं द्रव्य एवोत्पद्यत इत्यनुरोधेन स्वीकृततया समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वरूपं समवायिकारणत्वमपि द्रव्यलक्षणं सम्भवतीत्याह—समवायिकारणमित्यपि लक्षणमिति, लक्षणमित्यस्य द्रव्यलक्षणमित्यर्थः। गुणं लक्षयति—सामान्येति। सामान्यवानगुणोऽकर्मरूप इति लक्षणनिर्देशः। गुण इति लक्ष्यनिर्देशः। अगुणोऽकर्मरूप इत्येतावन्मात्रस्य गुणलक्षणत्वे सामान्यविशेषसमवायाभावेष्वतिव्याप्तिः स्यात्तद्वारणाय सामान्यवानित्युक्तमित्याह—सामान्यवानिति सामान्यविशेषसमवायाभावनिरास इति। द्रव्यमपि सामान्यवदकर्म चेति तत्रातिव्याप्तिवारणायागुणवदित्युक्तमित्याह—अगुण इति च द्रव्याणामिति। निरास इत्यनुवर्त्तते। कर्मापि सामान्यवदगुणञ्चेति तत्रातिव्याप्तिवारणायाकर्मरूपपदोपादानमित्याह—अकर्मरूप इति कर्मण इति। निरास इत्यनुवर्त्तनीयम् अगुण इत्यस्य न विद्यते गुणो यत्रेति व्युत्पत्त्या गुणरहित इत्यर्थः, न कर्माकर्म तद्रूपं तदा-

त्मकमिति कर्मभिन्नस्वरूपमित्यकर्मरूपं इत्यस्यार्थः। कर्म लक्षयति—आद्यविभागासमवायिकारणं कर्मेति। विभागजविभागे आद्यविभागस्यासमवायकरणत्वात् तत्रातिव्याप्तिवारणाय विभागस्याद्यमिति विशेषणमित्याह—आद्यविभागेतीति। विभागजविभागश्च द्विविधः, कारणमात्रविभागजन्यः कारणाकारणविभागः कारणाकारण विभागजन्यः कार्याकार्यविभागश्चेति। तत्र कपालद्वयविभागजन्यः कपालाकाशविभाग आद्यः,कपालाकाशविभागजन्यो घटाकाशविभागो द्वितीय इति बोध्यम्। आद्यविभागकारणमित्येतावन्मात्रोक्तावाद्यविभागसमवायिकारणे द्रव्येऽतिव्याप्तिरिति तद्वारणायासमवायिकारणमित्युक्तमित्याह—असमवायिकारणमिति द्रव्यादीनामिति। निरास इत्यस्यानुषङ्गः। अदृष्टादीनामादिपदाद्ग्रहणम्। सामान्यं लक्षयति- नित्यमेकमनेकसमवायि सामान्यमिति, अत्र नित्यमेकमनेकसमवायीति लक्षणनिर्देशः। सामान्यमिति लक्ष्यवचनम्। घटत्वादिकं प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वलक्षणनित्यत्वाधिकरणम्, घटत्वादिकं यदि अनित्यं स्यात्तदा यद्घटादिव्यक्त्युत्पत्तावुत्पद्येत तदा तद्व्यक्तिपूर्वभाविन्यां तद्विनाशकालभाविन्याञ्च व्यक्तौ नावतिष्ठेतेति तासु घटो घट इत्याद्यनुगतप्रतीत्यादिविलोपप्रसंग इति नित्यं तदभ्युपेयम्। एकं स्वसमानस्वभावद्वितीयरहितम्, यदीदृशं तन्न स्यात्तदा यथा व्यक्तिभ्योऽनेकाभ्यो नानुगतप्रतीत्यादिकं तथाऽनेकेभ्यो घटत्वादिभ्योऽप्यनुगतप्रतीत्यादिकं न स्यादित्येकमुपेयते, यद्यनेकासु घटव्यक्तिषु घटत्वमेकं समवायेन न वर्त्तेत तदाऽसम्बद्धस्यैव तस्यानुगतप्रतीतिजनकत्वे पटादिष्वपि घटोऽयं घटोऽयमित्यनुगतप्रतीत्यादिप्रसंग इत्यनेकासु घटव्यक्तिषु समवायसम्बन्धेन वृत्तिरस्याभ्युपेयेत्यनेकसमवायि तदिति लक्षणसमन्वयः एवञ्च कार्यकारणभावावच्छेदकतया विषयविधयाऽनुगतप्रतीतिनिबन्धनतया शब्दप्रवृत्तिनिमित्ततया च सामान्यसिद्धिः। व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः। रूपहानिरसंबन्धो जातिबाधकसङ्ग्रहः ॥१॥ इतिवचनाद्व्यक्त्यभेद-तुल्यत्व-सङ्करानवस्थारूपहान्यसम्बन्धानां जातिबाधकत्वमवसेयम्। संयोगविभागद्वित्वादिसंख्याद्विपृथक्त्वादीनामनेकानामप्येकत्वमनेकसमवायित्वञ्चेति तेष्वतिव्याप्तिवारणाय नित्यमित्युक्तमित्याह नित्यमितिसंयोगादिनिरास इति। एकपदकृत्यमाह एकमितीति। सलिलाद्यनेकपरमाणुषु समवेतानि यान्यनेकानि शुक्लरूपादीनि तेषां नित्यत्वे यानि अनेकसमवायित्वादुक्तलक्षणातिव्याप्तिस्तद्वारणायैकमित्युक्तमित्याह एकमितीति। प्रत्येकं नित्यानामेकरूपाणां द्रव्याणामुक्तलक्षणा-

कान्ततत्वादतिव्याप्तिस्तद्वारणायानेकसमवायीत्युक्तमित्याह अनेकसमवायीति-प्रत्येकं नित्यानां द्रव्याणामिति, निरास इत्यनुवर्त्तनीयम्। विशेषं लक्षयति एकद्रव्याः-स्वरूपसन्तो विशेषा इति। एकमेव द्रव्यं समवायितयैषामस्तीत्येकद्रव्यसमवेता इत्येकद्रव्या इत्यस्यार्थः, घटपटादीनां परस्परविरुद्धघटत्वपटत्वादिधर्माध्वासात्परस्परं भेदः, घटत्वाद्येकजातिमतां च घटादिव्यक्तीनामवयवि[…] क्षणुकपर्यन्तानां विभिन्नकपालाद्यवयवा[…]ध्यत्वतोभेदः निरवयवाना - ञ्चैकजातीयानां परमाण्वादीनां नित्यद्रव्याणां परस्परं भेदो विभिन्नविशेषधर्मयोगादेवेत्येकद्रव्याः। तेषां च विशेषत्वलक्षणजातिमत्त्वे जातिमतां न स्वरूपतो व्यावृत्ति - रिति परमाणूनामिव तेषामप्यन्यतो व्यावृत्तिरित्यनवस्था स्यादतस्ते न जातिमन्त इति स्वरूपत एव सन्त इति भवति विशेषेषु लक्षणसमन्वयः। सामान्ये सामान्य-स्वीकारे तत्रापि सामान्यमेवं तत्रापीत्यनवस्था, एवं समवायस्यैकत्वात् समवायस-म्बन्धाभावाच्च न तत्र सामान्यमिति सामान्यविशेषरूपातिरिक्ताऽपि सत्ता न सामा-न्यसमवाययोरिति स्वरूपसत्त्वादेव तयोस्सत्-प्रतीतिगोचरत्वमिति स्वरूपसतोस्तयो-रतिव्याप्तिस्स्यात्तद्वारणाय एकद्रव्या इत्युपात्तं, सामान्यसमवायौ चनैकद्रव्यवर्तिना-विति नातिव्याप्तिरित्याह-एकद्रव्या इति सामान्यसमवाययोर्निरास इति, एकद्रव्य-वर्तिनोरूपादिगुणकर्मणोरतिव्याप्तिवारणाय स्वरूपसन्त इति, गुणकर्मणी चातिरिक्त-सत्तावत्त्वादेव सदित्येकप्रतीतिविषयाविति न ते स्वरूपसती इति नातिव्याप्तिरित्याह-स्वरूपसन्त इति गुणकर्मणामिति, निरास इत्यनुवर्तते, द्रव्यं च नैकद्रव्यं नापि स्वरूपसदिति न तस्योक्तलक्षण-सम्भवोऽपीत्याह - द्रव्यस्य चाप्रसङ्ग एवेति। समवायं लक्षयति—नित्यप्राप्तिः समवाय इति, प्राप्तिः सम्बन्धः, नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणमित्यर्थः। सम्बन्धः संयोगोऽपीति तद्वारणाय नित्यत्वोपादानमित्याह—नित्येति संयोगनिवृत्तिरिति, नित्यत्वं नित्यद्रव्ये नित्य-गुणे सामान्यविशेषयोश्च तेषूतिव्याप्तिवारणाय प्राप्तिग्रहणमित्याह—प्राप्तिरिति तदतिरिक्तस्येति, निवृत्तिरित्यस्यानुकर्षः। द्रव्यादिषट्पदार्थसामान्यलक्षणसमाप्तिसूचनाय इतिपदोपादानम्। अत्र च द्रव्यादिपदार्थेषु च अन्तर्गणिको भेदः अवान्तर-विशेषः। तल्लक्षणान्यभिधित्सुराह—

**तत्र च द्रव्यं पृथिव्यादि नवधा, समानतन्त्रपरिसंख्यानात्। तत्र गन्धवती पृथिवी, स्वभावतो द्रवा आपः, औष्ण्यवत्तेजः, अरूपस्पर्शवान्**

**वायुः, शब्दगुणः आकाशः, परापरव्यतिकरानुमेयः कालः, परापरव्यवहारासाधारणकारणं दिक्। आत्ममनसोस्तु लक्षणमुक्तमेव, एवं नवद्रव्याणि।**

तत्र च द्रव्यादिपदार्थेषु पुनः, द्रव्यं पृथिव्यादि नवधा पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवप्रकारकम्। तत्र प्रमाणं समानतन्त्रपरिसङ्ख्यानादिति, समानतंत्रे वैशेषिकदर्शने सूत्रेण पृथिव्यादीनां नवानामेव द्रव्याणां परिगणनादित्यर्थः। तमसः प्रकृष्टालोकाभावरूपत्वेन, सुवर्णस्य तेजस्यन्तर्भावेन तयोरतिरिक्तद्रव्यत्वाभावादिति। तत्र नवसु द्रव्येषु मध्ये, गंधवती समवायेन गन्धाधिकरणतावती; पृथिवी भूः, समवायसम्बन्धेन गन्धाधिकरणत्वं पृथिव्या लक्षणमित्यर्थः। पाषाणादावपि गन्धोऽस्त्येव, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति नियमेन भस्मनो गन्धवत्तयोपलभ्यमानस्य पृथिवीत्वेन तदारम्भकपरमाणोरपि पृथिव्यात्मकभस्मारम्भकतया पृथिवीत्वेन तदारब्धस्य पाषाणस्यापि पृथिवीत्वेन गन्धवत्त्वात्, अनुपलब्धिस्त्वनुत्कृष्टत्वेनोपपद्यत इति।

जलं लक्षयति, स्वभावतो द्रवा आप इति, स्वभावतः सांसिद्धिकतया, द्रवा द्रवत्ववन्तः, आपः जलानि, सांसिद्धिकद्रवत्ववत्त्वं जलस्य लक्षणमित्यर्थः। पृथिवीतेजसोश्च द्रवत्वं नैमित्तिकं, न तु सांसिद्धिकमिति तयोर्निरासः। करकाया अपि यद्द्रव्यमित्यादिनियमेन जलावयवारब्धाया जलत्वेन सांसिद्धिकद्रवत्वं, प्रतिबन्धकादृष्टेन तदवरुद्धमित्यनुपलब्धिः। एवं समवायेन स्नेहवत्त्वं समवायेन शीतस्पर्शवत्त्वं च जलस्य लक्षणं बोध्यम्। तेजो लक्षयति औष्ण्यवत्तेज इति, समवायसम्बन्धेनोष्णस्पर्शवत्त्वं तेजसो लक्षणमित्यर्थः। चन्द्रादीनां जलस्पर्शाद्यभिभूततयोष्णयस्पर्शाद्यनुपलब्धिः। सुवर्णं तेजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वाद्यन्नैवं तन्नैवं यथा जलादीत्यनुमानेन तेजस्तया सिद्धस्य सुवर्णस्य पृथिव्यादिस्पर्शेणाभिभवादौष्ण्याद्यनुपलब्धिः।

वायुं लक्षयति अरूपस्पर्शवान् वायुरिति, रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। अरूपेति पृथिवीजलतेजसां निरासः। घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैवाभिव्यंजकत्वात् वायूपनीतपार्थिवसुरभिभागवदित्यनुमानेन पार्थिवतया सिद्धस्य घ्राणेन्द्रियस्य, रसनं जलीयं रूपादिषु मध्ये रसस्यैवाभिव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवदित्य-नुमानेन जलीयतया सिद्धस्य रसनेन्द्रियस्य, चक्षुस्तैजसं रूपादिषुमध्ये रूपस्यैवाभिव्य-

ञ्जकत्वात् प्रदीपवदित्यनुमानेन तैजसतया सिद्धस्य चक्षुरिन्द्रियसत्य, त्वगिन्द्रियं वायवीयं रूपादिषु मध्ये स्पर्शस्यैवाभिव्यंजकत्वादङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनवायुवदित्यनुमानेन वायवीयतया सिद्धस्या त्वगिन्द्रियस्य च पृथिवीत्वादिनाऽनुमितानां गन्धादीनामनुद्भूतत्वादनुपलब्धिरिति बोध्यम् ।

आकाशं लक्षयति, शब्दगुण आकाश इति, गुणपदं समवायेनाधारत्वलाभार्थम् । तेन समवायसम्बन्धेन शब्दाश्रयत्वमाकाशस्य लक्षणमित्यर्थः शब्दो गुणश्चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वाद्रसादिवदित्यनुमानेन शब्दस्य गुणत्वे सिद्धे शब्दो द्रव्याश्रितो गुणत्वाद्रूपादिवदित्यनुमानेन द्रव्याश्रितत्वे सिद्धे, शब्दो न स्पर्शवतां गुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखादिवदित्यनुमानेन शब्दस्य स्पर्शवत्पृथिव्यादिचतुष्टयगुणत्वाभावे सिद्धे शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वाद्रूपादिवदित्यनुमानेन दिक्कालमनोगुणत्वाभावे सिद्धे नात्मगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपादिवदित्यनुमानेनात्मगुणत्वाभावे सिद्धे शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वाद्यन्नैवं तन्नैवं यथाऽऽत्मादिरिति व्यतिरेकिणा पृथिव्याद्यष्टद्रव्यातिरिक्ताकाशद्रव्याश्रितः शब्द इति सिद्ध्यति । इत्थं शब्दगुणवत्तयाऽऽकाशसिद्धिर्ग्रन्थान्तरे प्रतिपादितेति । कालं लक्षयति, परापरव्यतिकरानुमेयः काल इति, परत्वापरत्वयोर्ज्येष्ठत्वकनिष्ठत्वयोर्जन्यद्रव्यवर्तिनोरसमवायिकारणकालजन्यद्रव्यपिण्डसंयोगाश्रयतया कालः सिद्ध्यति, अस्मादधिकतरसूर्यपरिस्पन्दान्तरितजन्माऽयमित्यपेक्षाबुद्धिः कालकृतपरत्वस्य निमित्तकारणम् एतस्मादत्यल्पतरसूर्यपरिस्पन्दान्तरितजन्मायमित्यपेक्षाबुद्धिः कालकृतापरत्वस्य निमित्तकारणमित्येवं परपरव्यतिकरेण परत्वापरत्वसम्बन्धेनानुमेयत्वं कालस्य लक्षणम् ज्येष्ठत्वकनिष्ठत्वलक्षणपरत्वापरत्वे सासमवायिकारणे भावकार्यत्वाद्घटादिवदित्यनुमानेन परत्वापरत्वयोस्सासमवायिकारणत्वे सिद्धे कालपिण्डसंयोगातिरिक्तासमवायिकारणत्वस्यबाधात् परत्वापरत्वे ज्येष्ठत्वकनिष्ठत्वलक्षणे कालपिण्डसंयोगासमवायिकारणके तदन्यासमवायिकारणकत्वाभावे सति सासमवायिकारणकत्वाद्यन्नैवं तन्नैवमिति व्यतिरेकिणा निरुक्तासमवायिकारणतया सिद्धस्य संयोगविशेषस्याश्रयः काल इति, अनियतपरत्वापरत्वकारणदिशो व्यतिरिक्तो नियतपरत्वापरत्वकारणं कालः । एवं इदानीं घट इत्यादि प्रतीतिः सूर्यपरिष्पन्दाधिकरणकतया यदि घटादिकं विषयी

करोति तदा सूर्यपरिष्पन्दादिना घटोदः सम्बन्धो वाच्यः स च संयोगादिः साक्षात् सम्बन्धो न सम्भवति, किन्तु स्वाश्रयसंयुक्त संयोग एवेति तद्घटकतया कालस्यावश्याभ्युपेयत्वेस्वल्पसम्बन्धविशेपलक्षणः साक्षात् सम्बन्ध एव कालेन सह घटादीनां वाच्यः, स च कालिकसम्बन्धपदवाच्य इति. तेन सम्बन्धेन विश्वस्याश्रयः जन्यमात्रस्य जनकः काल इत्येवं कालसिद्धिरवसेया। दिशं लक्षयति पूर्वापरादिव्यवहारासाधारणकारणं दिक् इति, आदिपदात्प्राचीप्रतीच्यादेरुपग्रहः, एकस्या अपि दिश उपाधिभेदेन प्राच्यादिनानाव्यपदेशनिबन्धनत्वम्। अन्यः प्रकारोऽत्रापि कालवदवसेयः। नियतक्रियोपनायकः कालः अनियतसंयोगोपनायिका दिगित्यनयोर्विशेषः। ज्ञानाद्यधिकरणमात्मा, सर्वात्मविशेषगुणसाधनं मन इत्येवमात्ममनसोर्लक्षणं पूर्वमुक्तमेवेति दर्शयति, आत्ममनसोर्लक्षणमुक्तमेवेति। उपसंहरति एवं नवद्रव्याणीति। गुणावान्तरभेदान् लक्षयति—

**चतुर्विंशतिर्गुणाः, तत्रैव परिसंख्यानात्। तत्र चक्षुर्ग्राह्य एवार्थो रूपम्। रसनग्राह्य एवार्थोरसः। घ्राणग्राह्यएवार्थो गन्धः, स्पर्शनग्राह्योऽर्थः स्पर्शः। यद्विशिष्टे द्रव्ये एकमित्यादिव्यवहारः सा संख्या। यद्विशिष्टे द्रव्ये दीर्घमित्यादिव्यवहारस्तत् परिमाणम्। यद्विशिष्टे द्रव्ये पृथगित्यादिव्यवहारस्तत् पृथक्त्वम्। कर्मविरोधी गुणः संयोगः। संयोगविरोधी गुणो-विभागः। यद्विशिष्टे द्रव्ये परमपरमिति व्यवहारस्ते परत्वापरत्वे। आह्लादः सुखम्। पीडा दुखम्। अनुराग इच्छा। असहिष्णुता द्वेषः। उत्साहः प्रयत्नः। पतनासमवायिकारणं गुरुत्वम्। स्यन्दनासमवायिकारणं द्रवत्वम्। यद्विशिष्टे स्निग्धमिति व्यवहारः स स्नेहः। यद् द्वितीयावस्थासमवेत उत्पन्नः तस्य तदवस्थापादको गुणः संस्कारः। श्रुत्यादिविहितानुष्ठानसाध्यः पुरुषगुणो धर्मः। श्रुत्यादिनिषिद्धानुष्ठानसाध्यः पुरुषगुणोऽधर्मः। श्रोत्रग्राह्योऽर्थः शब्द इति।**

चतुर्विंशतिः चतुर्विंशतिसङ्ख्याकाः, गुणाः गुणत्वजातिमन्तः, गुणत्वजातिस्तु गुणपदप्रवृत्तिनिमित्ततया सिध्यति, वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं

प्रवृत्तिनिमित्तत्त्वम् । गुणानांचतुर्विंशतिसंख्यकत्वे प्रमाणमाह—तत्रैव परिसंख्यानादिति, वैशेषिकदर्शन एव रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः' इति सूत्रेण चतुर्विंशसंख्यकतया परिगणनात्, सूत्रे चकारेण गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मसप्तानांशब्दानांग्रहणम्। तत्र रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मशब्दाः विशेषगुणाः, अन्ये सामान्यगुणाः, भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वं विशेषगुणत्वं तदन्यगुणत्वं सामान्यगुणत्वमितिबोध्यम् ।

तत्र चतुर्विंशतिगुणेषु मध्ये, रूपं लक्षयतिः—चक्षुर्ग्राह्यएवार्थो रूपमिति । द्रव्यगुणकर्मणां पारिभाषिकार्थपदव्यपदेश्यत्वम्, एवकारश्चक्षुर्भिन्नेन्द्रियग्राह्यत्वव्यवच्छेदकः, तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वेसति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयगुणत्वं रूपत्वमित्यर्थः। चक्षुस्त्वगिन्द्रियोभयग्राह्येषु संयोगविभादिगुणेषु चक्षुरिन्द्रियजन्यप्रत्यक्षविषयगुणत्वसत्त्वादतिव्याप्तिवारणाय चक्षुर्भिन्नेन्द्रिजन्यप्रत्यक्षाविषयत्वे सतीति । अत्र येनेन्द्रियेण यद्गृह्यते तद्गता जातिस्तदभावश्च तेनेन्द्रियेण गृह्यत इति नियमाद्रूपगतरूपत्वादिजातिरूपाद्यभावेषु चातिव्याप्तिवारणाय गुणत्वनिवेशः।

रसं लक्षयति—रसनग्राह्य एवार्थो रस इति, गुणे रसमात्रस्य प्रत्यक्षं रसनेन्द्रियेण नान्यगुणस्येत्येवकारोऽर्थपदानन्तरं योज्योऽन्यथा तदुपादानप्रयोजनं नास्ति, तथा च रसनेन्द्रिजन्यप्रत्यक्षविषयगुणत्वं रसत्वमित्यर्थः । एवं गन्धलक्षणेऽपीति ।

गन्धलक्षणमुपदर्शयति—घ्राणग्राह्य एवार्थो गन्ध इति, घ्राणेन्द्रियजन्यप्रत्यक्षविषयगुणत्वं गन्धत्वमित्यर्थः ।

स्पर्शं लक्षयति—स्पर्शनग्राह्योऽर्थः स्पर्श इति, अत्रान्यव्यवच्छेदफलकमेवकारोपादानमावश्यकम् तथा च स्पर्शनेन्द्रियभिन्नेन्द्रिजन्यप्रत्यक्षाविषयत्वे सति स्पर्शनेन्द्रियजन्यप्रत्यक्षविषयगुणत्वं स्पर्शत्वमित्यर्थः । सत्यन्तोपादानाद्द्वीन्द्रियग्राह्येषु संयोगादिषु नातिव्याप्तिः । संख्यां लक्षयति-यद्विशिष्टे द्रव्ये एकमित्यादिव्यवहारः सा संख्या इति, आदिपदाद् द्वौ त्रयइत्यादीनांग्रहः । एकत्वद्वित्वादिविशिष्टे द्रव्ये एकमित्यादिव्यवहारः सा संख्या इति, आदिपदाद् द्वौ त्रयइत्यादीनां ग्रहः । एकत्वद्वित्वादिविशिष्टे द्रव्ये एकद्व्यादिव्यवहारो भवतीति एकत्वद्वित्वादयः संख्या । संख्या । एकत्व-द्वित्वादिव्यवहारासाधारणकारणं संख्येति

पर्यवसितं लक्षणम्।

परिमाणं लक्षयति-यद्विशिष्टे द्रव्ये दीर्घमित्यादिव्यवहारः तत् परिमाणम् इति, आदिपदाद्ह्रस्वमणु महदित्यस्य ग्रहणम्, अत्रापि दीर्घह्रस्वादिपरिमितिव्यवहारासाधारणकारणं परिमाणमिति लक्षणमवसेयम्।

पृथक्त्वं लक्षयति-यद्विशिष्टे द्रव्ये पृथगित्यादिव्यवहारः तत् पृथक्त्वम्, पृथक्त्वगुणविशिष्टे द्रव्येऽयमस्मात् पृथगित्यादिव्यवहारो भवति तत् पृथक्त्वम्। पृथग्व्यवहारासाधारणकारणत्वं पृथक्त्वमित्यर्थः। द्वित्वादिपरार्धपर्यन्तसंख्या द्विपृथक्त्वादिपरार्द्धपर्यन्तं पृथक्त्वञ्चापेक्षाबुद्धिजन्यं, पर्याप्तिसम्बन्धेन व्यासज्यवृत्तित्वञ्च तेषाम्। अपेक्षाबुद्धिश्चायमेकोऽयमेक इत्याकारिकाऽनेकैकत्वप्रकारिका, तन्नाशाद्द्वित्वादिसंख्यानां द्विपृथक्त्वादीनां च नाश इति बोध्यम्।

संयोगं लक्षयति-कर्मविरोधी गुणः संयोग इति, प्रथमक्षणे कर्म, ततो द्वितीयक्षणे विभागः, ततस्तृतीयक्षणे पूर्वसंयोगनाशः, ततश्चतुर्थक्षणे उत्तरदेशसंयोगः, ततः पञ्चमक्षणे कर्मनाश इत्येवमुत्तरसंयोगात् कर्मनाशो भवतीति कर्मनाशकत्वात् संयोगः कर्मविरोधीति लक्षणसमन्वयः। संयुक्तव्यवहारासाधारणकारणत्वं संयोगत्वमित्यपि लक्षणं बोध्यम्।

बिभागं लक्षयति-संयोगबिरोधी गुणो बिभागः इति। पूर्वसंयोगनाशकत्वेन संयोगविरोधी गुण इति लक्षणसमन्वयः। संयोगविभागौ चाव्याप्यवर्त्तिनौ, अव्याप्यवृत्तित्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। यत्र यदवच्छेदेन संयोगविभागौ वर्त्तेते तत्र तदन्यावच्छेदेन तदभावावपि वर्त्तेते इत्येवमव्याप्यवृत्तित्वं तयोः, बिभक्तव्यवहारासाधारण-कारणत्वं विभागत्वमित्यपि लक्षणम्।

परत्वापरत्वे लक्षयति-यद्विशिष्टे द्रव्ये परमपरमिति व्यवहारः ते परत्वापरत्वे इति। स्पष्टम्। इदमस्मात्परमिदमस्मादपरमिति व्यवहारासाधारणकारणे परत्वापरत्वे इत्यपि लक्षणम्। ते च दैशिके कालिके च, दैशिकपरत्वापरत्वयोर्दिक्पिण्डसंयोगोऽसमवायिकारणम्, अधिकतरमूर्त्तसंयोगान्तरितत्वज्ञानलक्षणाऽपेक्षाबुद्धिः परत्वस्य, अल्पतरमूर्त्तसंयोगान्तरितत्वज्ञानलक्षणाऽपेक्षाबुद्धिरपरत्वस्य च निमित्तकारणम्। तन्नाशाच्च तयोर्नाशः, कालिकपरत्वापरत्वयोः कालपिण्डसंयोगोऽसमवायिकारणम्। बहुतरसूर्यपरिस्पन्दान्तरितजन्यत्वज्ञानलक्षणापेक्षाबुद्धिः कालिकपरत्वस्य निमित्तकारणम्, अल्पतरसूर्यपरिस्पन्दान्तरितजन्यत्वज्ञानलक्षणापेक्षाबुद्धि

कालिकापरत्वस्य निमित्तकारणं, तन्नाशात्तन्नाश इत्यत्र विवेकः।

बुद्धिलक्षणं मूले त्रुटितम्। तच्च सर्वव्यवहारासाधारणकारणं बुद्धिरित्येवं रूपं ज्ञेयम्।

सुखं लक्षयति-आह्लादः सुखमिति, अन्येच्छानधीनेच्छाविषयः सुखम्, सुखेच्छा फलेच्छारूपा तत्र फलज्ञानमेव कारणमिति भवति सुखेच्छा अन्येच्छानधीनेच्छा तद्विषयः सुखमिति लक्षणसमन्वयः।

दुःखं लक्षयति-पीडा दुःखमिति। अन्यद्वेषानधीनद्वेषविषयो दुःखम्, दुःखस्वरूपे ज्ञाते इदं मे न भवत्विति द्वेषस्तद्विषयो दुःखं भवति न तत्रान्यद्वेषः कारणम्, किन्तु दुःखज्ञानादेव दुःखम्मे न भवत्विति अन्यद्वेषानधीनद्वेषविषयो दुःखमिति लक्षणसमन्वयः।

इच्छां लक्षयति-अनुराग इच्छेति, इदं मे भवत्वित्येवंविधेच्छाऽनुरागः, सा च फलेच्छोपायेच्छाभेदेन द्विविधा, तत्र फलेच्छाम्प्रति फलज्ञानं कारणम्। उपायेच्छाम्प्रति इष्टसाधनताज्ञानं ममेदमिष्टसाधनमित्याकारकं कारणम्। चिकीर्षारूपाऽहमिदं कुर्यामित्याकारकेच्छारूपोपायेच्छाम्प्रति इदम्मम कृतिसाध्यमित्याकारकं कृतिसाध्यताज्ञानमपि कारणमिति विवेकः।

द्वेषं निरूपयति-असहिष्णुता द्वेष इति, इदम्मे मा भवतु इदं सोढुं न मया शक्यते इत्येवमाकाराऽसहिष्णुता द्वेषः। स च द्विविधः फलद्वेषः, उपायद्वेषश्च; फलद्वेषे फलज्ञानं कारणम्। उपायद्वेषे द्विष्टसाधनताज्ञानं कारणमिति।

प्रयत्नं लक्षयति-उत्साहः प्रयत्न इति, शरीरेन्द्रियादिगतक्रियाविशेषलक्षणचेष्टाजनक आत्मनो व्यापार उत्साहः अहमिदं कर्त्तुमुत्सहे इत्यादिधीविषयः। स प्रयत्नः प्रवृत्तिनिवृत्तिजीवनयोनियत्नभेदेन त्रिविधः। तत्र जीवनयोनियत्न उक्तज्ञानाविषयोऽतिन्द्रियोऽपि प्राणक्रिययाऽनुमेयः, प्रवृत्तिनिवृत्ती चोक्तप्रत्ययविषयौ, तत्र प्रवृत्ताविष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं चिकीर्षोपादानप्रत्यक्षञ्च कारणम्। निवृत्तौ द्विष्टसाधनताज्ञानं द्वेषश्च कारणम्, जीवनयोनियत्ने च जीवनादृष्टविशेषः कारणमिति।

गुरुत्वं लक्षयति पतनासमवायिकारणं गुरुत्वम् इति, द्वितीयपतनादौ वेगस्यासमवायिकारणत्वात् तत्रातिव्याप्तिवारणाय पतने आद्येति विशेषणं देयम्। तेनाद्यपतनासमवायिकारणत्वं गुरुत्वस्य लक्षणं पर्यवसितम्।

द्रवत्वं लक्षयति-स्पन्दनासमवायिकारणं द्रवत्वमिति, द्वितीयस्यन्दनासमवायिकारणे वेगेऽतिव्याप्तिवारणायाद्येति स्यन्दने विशेषणं देयम्। तेन आद्यस्यन्दनासमवायिकारणत्वं द्रवत्वस्य लक्षणम्।

स्नेहं लक्षयति-यद्विशिष्टे द्रव्ये स्निग्धमितिव्यवहारः स स्नेह इति, स्पष्टम्। चूर्णादिपिण्डीभावहेतुगुणत्वमपि स्नेहस्य लक्षणम्, अपकृष्टस्नेहवतो जलस्याग्निनाशकत्वेऽप्युत्कृष्टस्नेहस्य तस्य दहनानुकूल्यमेवेति तैलान्तर्गतस्निग्धजलेनाग्निरुद्दीप्त एव भवति, नतु नश्यतीति बोध्यम्।

संस्कारं लक्षयति-यद्द्वितीयावस्थासमवेत उत्पन्नस्तस्य तादवस्थ्यापादको गुणः संस्कार इति, एतच्च लक्षणं स्थितिस्थापकसमनुगतं, यतः वृक्षादीनां शाखाद्वितीयावस्थाऽऽकृष्टावस्था तत्समवेतस्तदाश्रितः शाखादिरुत्पन्नस्तस्य शाखादेस्तादवस्थ्यस्यानाकृष्टावस्थाश्रितसरलत्वादेरापादको गुणः स्थितिस्थापकसंस्कार इति तत्र लक्षणसमन्वयः। वेगाख्यभावनाख्यसंस्कारयोर्यद्यपि नैतल्लक्षणाक्रान्तता, तथाप्युक्तलक्षणवद्वृत्तिगुणत्वव्याप्यजातिमत्त्वं संस्कारत्रयानुगतं लक्षणमिति। अथवा यद्द्रव्यपदार्थो द्वितीयावस्थासमवेतस्तदाश्रित उत्पन्नः तस्य वेगवशाद्दूरं गत्वा पतितस्य यः पुनरक्रियावस्थालक्षणतादवस्थ्यापादको वेगाख्यस्संस्कार इत्यनुगमनम्। यद्यपि गुरुत्वादेव पतनं, तथापि गुरुत्वसध्रीचीनवेगस्यापि तत्त्वम्, गुरुत्वव्यावृत्तये च गुरुत्वभिन्नत्वं देयम्। एवं आत्मा पूर्वानुभवावस्थाविलक्षणद्वितीयानुभवावस्थापन्नो भावनावशात्तदनुभवावस्थालक्षणतादवस्थ्यापादकभावनाख्यसंस्काराश्रय एवोत्पन्नः, तस्यास्य पुनः स्मरणं यद् भवति, तद् भावनावशादेव, भावना च स्थितिस्थापकवदुत्तरकालेषु स्वाश्रयमनुसरतीति विचारणीयम्।

धर्मं लक्षयति श्रुत्यादिविहितानुष्ठानसाध्यः पुरुषगुणो धर्म इति, स्वर्गकामो दर्शपूर्णमासाभ्यां यजेतेतिश्रुत्यादिविहितो यागादिस्तदनुष्ठानसाध्यस्तत् कर्त्तुः पुरुषस्यैव गुणः, नतु यागाद्युपयुक्तघृतादिपरमाणुगतः, तस्य सर्वसाधारणत्वेन येन यागादिःकृतस्तस्येव तदन्यस्यापि संस्कृतपरमाणुसमष्ट्युपजातशरीरादितो भोगप्रसंगात् चिरध्वस्तस्य यागादेर्धर्मलक्षणव्यापारं विना न स्वर्गादिफलजनकत्वमतस्तज्जन्यो धर्मस्तद्व्यापारोऽवश्यमभ्युपेयः, तदुक्तं कुसुमाञ्जलावुदयनाचार्येण :—

चिरध्वस्तं फलयालं न कर्मातिशयं विना। सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि॥ इति। अधर्मं लक्षयति श्रुत्यादिनिषिद्धानुष्ठानजन्यः पुरुषगुणोऽधर्मः।

ब्राह्मणं न हन्यात्, सुरां न पिबेदिति श्रुत्यादिनिषिद्धो यो ब्राह्मणहननसुरापानादिस्त-दनुष्ठानसाध्यस्तत्करणजन्यः पुरुषगुणस्तत्कर्तृपुरुषसमवेतगुणोऽधर्म इति लक्षण-समन्वयः। तत्सिद्धिर्धर्मसिद्धिवदवसेया।

शब्दं लक्षयति-श्रोत्रग्राह्योऽर्थः शब्द इति. श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयो गुणः शब्द इत्यर्थः।

कर्माणि उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च विशेषा ऊर्ध्वाधोदेशादि-संबन्धिभेदकृताः नतु स्वरूपवैलक्षण्यं तेषामिति तल्लक्षणानि न दर्शितानि। यद्यपि सामान्यविशेषसमवायानां लक्षणानि भावितानि, तथापि तेषां प्रमाणसिद्धत्वोपदर्शनाय भावना, सामान्यं सदादिप्रत्ययहेतुसत्त्वादिकम्, विशेषा व्यावृत्तिबुद्धिहेतवः, समवाय इहेति प्रत्ययहेतुरिति गतार्थानि चैतानीति। उपसंहरति एते षट्पदार्था ह्युक्ताः समासतः इति, व्यासतस्तु एषामनन्तभेदा इत्याह अनन्तान्तर्गणिकभेदेन तु अनन्ताः, तत्र युक्त्या प्रतिपत्तव्या इति, अनन्तावान्तभेदेन पुनः अनन्तसंख्याः तेषु षट्सु पदार्थेषु युक्तितो ज्ञातव्या इत्यर्थः, तद्यथा नवविधेषु द्रव्येषु पृथिवी नित्यानित्यभेदेन द्विविधा, परमाणुरूपा पृथिवी नित्या, द्व्यणुकादिरूपाऽनित्या, सापि शरीरेन्द्रियविषयभेदेन त्रिविधेति। एवं जलतेजोवायूनां भेदाः, आकाशस्य श्रोत्रेन्द्रियैकरूपत्वेपि पुरुषभेदेना-नेकरूपत्वम्, कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्रतया कर्णशष्कुलीरूपस्योपाधेरनेक-विधत्वात्, कालस्य नित्यैकरूपत्वेऽपि उपाधिभेदेन क्षणलवदण्डमुहूर्त्तप्रहरदिनरात्रि-पक्षमासर्त्तुवर्षयुगादिभेदेनानेकविधत्वम्। दिशस्स्वरूपत एकत्वेऽपि प्राचीप्रतीच्यु-दीच्यवाच्यादिभेदेनानेकविधत्वम्। आत्मनो जीवेश्वरभेदेन द्वैविध्यम्। तत्र जीवस्य मनुष्यतिर्यक्सुरासुरनरकगतिभेदेन बन्धमुक्तादिभेदेनानेकविधत्वम्। मनसस्तु पुरुषभेदेनानन्तत्वम्।

चतुर्विंशतिसंख्यकानां रूपादिगुणानामपि प्रत्येकमनेकविधत्वम्, तत्र रूपस्य शुक्लनीलपीतरक्तहरितकपिशचित्रभेदेन सप्तविधत्वम्। रसस्य तु मधुराम्लकटुक-षायतिक्तलवणभेदेन षड्विधत्वम्। गन्धस्य सुगन्धदुर्गन्धभेदेन द्विविधत्वम्। स्पर्शस्य शीतोष्णानुष्णाशीतभेदेन त्रिविधत्वम्। एवं रूपरसगन्धस्पर्शानां पाकजापाकजभेदेन द्वैविध्यम्। संख्या नित्यानित्यभेदेन द्विविधा, नित्यद्रव्यगतैकत्वसंख्या नित्या, तदन्या द्वित्वादिः संख्या परार्द्धपर्यन्ताऽनित्यापेक्षाबुद्धिजन्या। परिमाणं महद्दीर्घ-ह्रस्वाणुभेदेन चतुर्विधम्, तेषां च परममध्यमभेदेन द्वैविध्यम्, पृथक्त्वस्य संख्यावन्नि-

त्वानित्यभेदेन तदवान्तरानित्यद्विपृथक्त्वादिपरार्द्धपृथक्त्वादिभेदेनानेकविधत्वम्। संयोगस्यान्यतरकर्मजोभयकर्मजसंयोगजसंयोगभेदेन त्रैविध्यम्, विभागस्यान्यतरकर्मजोभयकर्मजविभागजविभागभेदेन त्रैविध्यम् परत्वापरत्वयोश्च दैशिककालिकभेदेन द्विपरत्वापरत्वादिभेदेनानेकविधत्वम्, बुद्धेश्चानुभवस्मरणभेदेन द्वैविध्यम्, तत्रानुभवस्य प्रत्यक्षानुमित्युपमितिशाब्दभेदेन चतुर्विधत्वम्। तत्र प्रत्यक्षस्य लौकिकालौकिकभेदेन द्वैविध्यम्। तत्र लौकिकस्य षड्विधलौकिकसन्निकर्षजन्यत्वेन षड्विधत्वम्। अलौकिकस्यालौकिकत्रिविधसन्निकर्षजन्यत्वेन त्रिविधत्वम्। एवं सविकल्पनिर्विकल्पभेदेन प्रत्यक्षस्य द्वैविध्यम्। तथा ज्ञानस्य प्रमाऽप्रमाभेदेन द्वैविध्यम्। तत्राप्रमायाः संशयविपर्ययभेदेन द्वैविध्यम्। तथा सविकल्पकज्ञानस्य प्रत्यक्षपरोक्षान्यतररूपस्य विशिष्टबुद्धिविशिष्टवैशिष्ट्यबुद्ध्युपलक्षितवैशिष्ट्यबुद्धिसमूहालम्बनबुद्ध्येकत्रद्वयमितिबुद्ध्यादिभेदेनानेकविधत्वम्। सुखदुःखयोश्च निमित्तभेदेन तत्तारतम्यभेदेन चानेकविधत्वम्। इच्छाद्वेषप्रयत्नानां भेदाः पूर्वमेवोक्ताः। गुरुत्वस्यापकर्षोत्कर्षभेदेन द्वैविध्यम्। द्रवत्वस्य च सांसिद्धिकनैमित्तिकभेदेन द्वैविध्यम्। प्रकर्षापकर्षतरतमादिभेदेन स्नेहस्यानेकविधत्वम्। संस्कारस्य वेगभावनास्थितिस्थापकभेदेन त्रिविधत्वम्। धर्माधर्मयोश्च विहितनिषिद्धकर्मरूपनिमित्तभेदेनानेकविधत्वम्। शब्दस्य ककारादिवर्णध्वन्यादिभेदेनानेकविधत्वम्, तत्र वेगस्य कर्मजवेगजभेदेन द्वैविध्यम्, कर्मणश्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदेन भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनभेदेन चानेकविधत्वम्, सामान्यस्य परसामान्यापरसामान्यपरापरसामान्यभेदेन त्रिविधत्वम्, व्यावर्त्तकस्वभावानां विशेषाणां च नित्यद्रव्यरूपाश्रयवैचित्र्याद्वैविध्यम्, समवायस्यैकत्वमेवेत्येवमवान्तरभेदानां लक्षणभेदा ऊहनीया इति।

क्रमप्राप्तं संशयं लक्षयति—"'अयं किमेवम् अन्यो वा' इति विमर्शः संशय इति स्वरूपतः। एकस्मिन् धर्मिणि परस्परविरुद्धधर्मद्वयगोचरं ज्ञानं संशय इति विषयतः। विषयज्ञानात् परस्परविरुद्धारोप्यस्मरणान्निर्णायकाभावादुत्पन्नं ज्ञानं संशय इति कारणतः। सामान्यतोऽप्यज्ञातायां स्थूणायां पश्चादवस्थितायां संशयो न भवतीति तद्व्युदासार्थं प्रथमं पदम्। उपलब्धेऽप्यनिर्णीते विमतिविषये परस्परविरुद्धार्थास्मृतेः नार्थमधिगच्छतः संशयो न भवतीति तद्व्युदासार्थं द्वितीयं पदम्। विषयोपलम्भे विरुद्धविशेषस्मरणेऽपि सति निर्णयोऽपि तरुमुपलभ्य विदूरवर्त्तिनो

भवति, न तत्संशय इति तन्निवृत्त्यर्थं तृतीयं पदम्। परस्परविरुद्धारोप्यस्मृतिस्तु क्वचित् समानधर्मदर्शनात्, क्वचिदनेकधर्मदर्शनात्, क्वचिद्वादिविप्रतिपत्तोरिति तदेतदाह कारणत्वेन सूत्रकारः"।

अयं पुरत उपलभ्यमानः, किमिति वितर्के, एवम् अवभासमानस्वरूपः, अन्यो वा तद्विभिन्नो वा, इति इत्याकारकः विमर्शः दोलायमानावबोध इति लक्षणम्, संशय इति लक्ष्यम्, स्वरूपतः लक्ष्यस्वरूपात्मकमिदं लक्षणमित्यर्थः। तटस्थलक्षणं विषयतः कारणतश्च भवति, तत्र प्रमाणमाह एकस्मिन्निति, एकविशेष्यकं परस्परविरुद्धनानाधर्मप्रकारकज्ञानं संशयः, अयं स्थाणुर्नवेति ज्ञानं पुरोवर्त्युच्चैस्तरविशेष्यकं स्थाणुत्वतदभावप्रकारकं ज्ञानं, तथा निरुक्तविशेष्यकं पुरुषत्वतदभावप्रकारकमयं पुरुषो नवेति ज्ञानञ्च संशयः, अयं स्थाणुर्वा पुरुषो वेति ज्ञानं चतुष्कोटिकं संशयः तत्र वाकारद्वयेन स्थाणुत्वाभावपुरुषत्वाभावयोरुल्लेखात् पुरोवर्तिस्थूणाविशेष्यकस्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावात्मकचतुष्कोटिप्रकारकज्ञानं संशय इत्येके। वाकारद्वयेन संशमस्वरूपस्यैवोल्लेख इति स्थूणाविशेष्यकस्थाणुत्वपुरुषत्वोभयप्रकारकं ज्ञानं द्विकोटिकं संशयः, संशयस्य द्विकोटिकत्वमेवेति नियमादित्यन्ये। द्वितीयमाह विषयज्ञानादिति, विषयपदं धर्मिपरं धर्मिज्ञानादित्यर्थः, अस्योत्पन्नमित्यनेनान्वयः, परविरुद्धारोप्यस्मरणादित्यस्य स्थाने परस्परविरुद्धारोप्यस्मरणादिति पाठो युक्तः, परस्परविरुद्धावन्योन्याधिकरणावर्तिनौ यावारोप्यौ तयोः स्मरणादित्यर्थः, अस्याप्युत्पन्नमित्यनेनान्वयः, निर्णायकाभावात् एककोटिनिर्णयजनकाभावात्, उक्तकारणत्रयादुत्पन्नं ज्ञानं संशय इत्येवंकारणतो लक्षणमित्यर्थः। यथा पुरोवर्त्तिधर्मिज्ञानस्थाणुत्वतदभावरूपकोटिद्वयस्मरणतदेककोटिनिर्णायकाभावैतत्त्रयादुत्पन्नम् अयं स्थाणुर्नवेतिज्ञानं संशयः। कारणतः संशयस्य लक्षणे विषयज्ञानादित्यस्य प्रयोजनमाह सामान्यतोऽपीति, सामान्यरूपेणापीत्यर्थः; अपिना-विशेषरूपेण ज्ञानत्वस्य परिग्रहः, स्थूणायां शाखादिरहितवृक्षस्कन्धविशेषरूपा स्थूणा तस्यां, धर्मिणोभावादेव न तत्र संशयो न तु धर्मिज्ञानाभावादित्याशङ्कानिवृत्तयेत्वाह पश्चादवस्थितायामिति, पृष्ठभागे स्थितायामित्यर्थः। तेन स्थूणारूप धर्मी तत्र वर्त्तते नतु तदभाव इति धर्मिज्ञानाभावादेव न तत्रसंशयो न तु धर्म्यभावादित्यर्थः। संशयो न भवति। परस्परविरुद्धारोप्यद्वयस्मरणनिर्णायकाभावद्वयसत्त्वेऽपि संशयो न भवति तद्दशाकालीनज्ञानेऽतिव्याप्तिवारणाय तद्व्युदासार्थमित्य-

स्यार्थः, प्रथमं पदं विषयज्ञानादिपदमुपात्तमित्यर्थः। परस्परविरुद्धारोप्यस्मरणादिति द्वितीयकारणोपादानप्रयोजनमाह उपलब्धेऽपीति सामान्यतोज्ञातेऽपीत्यर्थः। अनिर्णीते निर्णायकाभावान्निर्णयाविषयीकृते, विवादविषये विप्रतिपत्तिविषये धर्मिणीतियावत्, परस्परविरुद्धार्थास्मृतेः परस्परविरुद्धारोप्यद्वयस्मरणाभावात्, नावमधिगच्छत इत्यस्य स्थाने तत्त्वमनधिगच्छत इति पाठो युक्तः, तत्त्वमुभयकोट्योरेकम्, अनधिगच्छतोऽजानतः, तद्व्युदासार्थं तत्स्थलीययत्किञ्चिज्ज्ञानेऽतिव्याप्तिवारणार्थम्, द्वितीयं पदं परस्परविरुद्धारोप्यस्मरणादितिपदमुपात्तम्। निर्णायकाभावादिति तृतीयहेतूपादानप्रयोजनमुपदर्शयति विषयोपलम्प इति धर्मिज्ञाने सतीत्यर्थः, एतेन प्रथमहेतुसद्भावोद्दर्शितः, विरुद्धविशेषस्मरणेऽपि सति परस्परविरुद्धयोरारोप्ययोः स्मरणेऽपि सति, अपिना विषयोपलम्भ इत्यत्रापि सति सप्तमीतिदर्शितम्, एतेन द्वितीयहेतुसत्त्वमुपदर्शितम्, निर्णयोऽपीत्यपिना यस्य न निर्णयस्तस्य संशयो भवति तत्र लक्षणसमन्वयः, किन्तु यस्य निश्चय उपजायते तस्य निश्चयरूपप्रतिबन्धकसद्भावान्न संशय इति सूचितम्, कस्य निर्णयो भवतीत्याकाङ्क्षानिवृत्त्यर्थम् आह तरुमुपलभ्य विदूरवर्त्तिनो भवतीति, यस्य तरोरुपलम्भो न पूर्वमय च विदूरवर्त्तित्वं तस्य न भवति निर्णय इति तरूपलम्भस्य निर्णयजनकत्वं तरुमुपलभ्येत्यनेन दर्शितम्, न तत् संशय इति तु स्पष्टावगमार्थम्, तन्निवृत्त्यर्थं तन्निर्णयेऽतिव्याप्तिवारणार्थम्, तृतीयं पदं निर्णायकाभावादिति तृतीयं कारणमुक्तमित्यर्थः। परस्परविरुद्धारोप्यस्मृतिस्तु क्वचित् समानधर्मदर्शनादिति भवतीतिशेषः। उभयकोटिसहचरितो धर्मः समानधर्मः साधारणधर्मः तस्य दर्शनादुपलम्भात्, क्वचित् स्थाण्वादौ, परस्परविरुद्धारोप्ययोः स्थाणुत्वतदभावयोः पुरुषत्वतदभावयोर्वा स्मृतिःस्मर भवतीति, यथोच्चैस्तरत्वं स्थाणुत्ववति स्थाणुत्वाभाववति च वर्त्तते एवं पुरुषत्ववति पुरुषत्वाभाववति च वर्त्तते इत्युभयकोटिसहचरितत्वात् साधारणो धर्मः तस्य पुरोवर्त्तिनि दर्शनादयं स्थाणुर्नवेति अयं पुरुषो न वेति संशयो भवतीति। क्वचिदनेकधर्मदर्शनात् क्वचित् शब्दादौ, अनेकधर्मस्य प्रसिद्धनित्यानित्याभ्यामाकाशादिघटादिभ्यां व्यावृत्तत्वादसाधारणधर्मस्य शब्दत्वादेर्दर्शनादुपलम्भात् परस्परविरुद्धारोप्ययोर्नित्यत्वानित्यत्वयोः स्मृतिर्भवति ततश्च शब्दो नित्यो नवेत्यादिसंशय उपजायत इति, क्वचिद्वादिविप्रतिपत्तेरितीति, क्वचित् प्रपञ्चादौ वादिनोरद्वैतवादिद्वैतवादिनोः विरुद्धा प्रतिपत्तिर्ज्ञानं यस्मादितिव्युत्पत्त्या विरुद्धधर्मद्वयप्रतिपादकं प्रपञ्चो मिथ्या न वेतिवाक्यं विप्रतिपत्तिस्तस्मात् परस्परविरुद्धा-

रोप्ययोर्मिथ्यात्वतदभावयोः स्मरणात् प्रपञ्चो मिथ्या न वेतिसंशय उपजायते, एवं मीमांसक - नैयायिकाद्योर्वादिप्रतिवादिनोश्शब्दो नित्यो न वेत्यादिविप्रतिपत्तिवाक्यान्नित्यत्वानित्यत्वयोः स्मरणाच्छब्दो नित्यो न वेति संशयो भवतीति। उक्तार्थे सूत्रकारस्य भगवतो महर्षेर्गौतमस्य संवादमुपदर्शयति तदेतदाह कारणत्वेन सूत्रकार इति, तत् सूत्रञ्च :—

'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः इति। संशय इति लक्ष्यनिर्देशः, विमर्श इत्यत्र विशब्दो विरोधार्थः, मृशिर्ज्ञानार्थः, अत्र संशय इति एकस्मिन् धर्मिणीति पूरणीयम्, तेनैकस्मिन् धर्मिणि विरोधेन भावाभावप्रकारकज्ञानं संशयः। तत्र कारणमुखेन विशेषलक्षणान्याह समानेत्यादि, उपपत्तिर्ज्ञानम्, तथाच समानस्य विरुद्धकोटिद्वयस्य उपपत्तिर्ज्ञानम्, तथा च समानस्य विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः, अनेकधर्मोऽसाधारणधर्मः तज्ज्ञानादित्यर्थः। साधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः। विप्रतिपत्तिर्विरुद्धकोटिद्वयोपस्थापकः शब्दःतस्मादित्यर्थः, यद्यपि शब्दस्य न संशायकत्वम्, तथापि शब्दात्कोटिद्वयोपस्थितौ मानसः संशय इतिवदन्ति इति। एवं वृत्तावुपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयोपपादनं कृतं ततोऽवधार्यम्। सत्प्रतिपक्षस्थले साध्यव्याप्यवत्तापरामर्शसाध्याभावव्याप्यवत्तापरामर्शाभ्यां संशयात्मिकामनुमितिं स्वीकुर्वन् रत्नकोशकारोऽपरोक्षवत् परोक्षज्ञानमपि संशयात्मकमभ्युपैति, परोक्षज्ञानं निर्णयात्मकमेवेति नियमं नाभ्युपैति, तन्मते विप्रतिपत्तिवाक्यात् संशयो भवत्येवेति बोध्यम्।

क्रमप्राप्तं प्रयोजनं लक्षयति :

"यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनमिति (अ० १।सू०२४) सुगमं सूत्रम्।"

इदं च व्याख्यातं वृत्तावित्थम् अधिकृत्य उद्दिश्य, तथा च प्रवृत्तिहेत्विच्छाविषयत्वं तत्त्वम्, विषयत्वं साध्यत्वाख्यविषयताविशेषः,तेन सुखत्वादिवारणम्, प्रवृत्तिहेत्विवतिस्वरूपकथनम्, तक्षकचूडामणिसुमेर्वादिप्राप्तिवारकं तदिति केचित्, अत्र च निरुपाधीच्छाविषयत्वात् सुखदुःखाभावयोर्मुख्यं प्रयोजनत्वम्, तदुपायस्य तदिच्छाधीनेच्छाविषयत्वाद्गौणं प्रयोजनत्वमिति। क्रमप्राप्तं दृष्टान्तं लक्षयति :

"व्याप्तिग्रहणविषयो दृष्टान्तः, स द्विविधः साधर्म्यवैधर्म्याभ्याम्, साधनधर्मप्रयुक्तसाध्यधर्मवान् धर्मी साधर्म्यदृष्टान्तः, साध्यधर्मनिवृत्तिप्रयुक्तसाधनधर्मनिवृत्ति-

मान् वैधर्म्यदृष्टान्तः, एतेनैवादृष्टान्ताः तदाभासाश्च निराकृताः"।

व्याप्तिग्रहणेति यस्मिन्धर्मिणि महानसादौ ह्रदादौ वा साध्यसाधनयोर्वह्निधूमाद्यो-स्साध्याभावसाधनाभावयोर्वह्न्यभावधूमाभावाद्योर्वा यो यो धूमवान् स वह्निमान् यथा महानस', यत्र यत्र धूमस्तत्र वह्निर्यथा महानसे इति, यो न वह्निमान् स न धूमवान् यथा ह्रदः, यत्र यत्र वह्न्यभावस्तत्र धूमाभावः यथा ह्रदे इति वेत्येवमन्वयव्याप्तिग्रहणं व्यतिरेकव्याप्तिग्रहणं च भवति तादृशव्याप्तिग्रहणविषयो महानसादिः ह्रदादिश्च दृष्टान्त इत्यर्थः, स दृष्टान्तः, साधर्म्यवैधर्म्याभ्यां द्विविधः द्विप्रकारकः, साधर्म्यदृष्टान्तलक्षणमाह साधनधर्मेति साधनं हेतुस्तद्रूपो योधर्मस्तत्प्रयुक्तस्तदधीन यस्साध्यधर्मः साध्यरूपो धर्मस्तद्वान् तदाश्रयः साधर्म्यदृष्टान्तः, यथा धूमादिधर्मप्रयुक्तवह्न्यादिधर्मवान्महानसादिः साधर्म्यदृष्टान्तोऽन्वयव्याप्तिग्रहणविषय इत्यर्थः। वैधर्म्यदृष्टान्तलक्षणमाह साध्यधर्मनिवृत्तीति, व्यापकीभूतविधेयात्मकधर्माभावप्रयोज्यव्याप्योभूतहेत्वभावात्मकधर्मवान् वैधर्म्यदृष्टान्तः। यथा वह्न्याद्यभावप्रयोज्यधूमाद्यभावाश्रयो ह्रदादिर्वैधर्म्यदृष्टान्तो व्यतिरेकव्याप्तिग्रहणविषय इत्यर्थः। "अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते। साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥१॥" इति वचनं प्राचामत्रानुसन्धेयम्। साध्यसाधनयोस्साहचर्यनियमः स्वव्यापकसाध्यसामानाधिकरण्यरूपोऽन्वयव्याप्तिः, साध्याभावसाधनाभावयोस्साहचर्यनियमः साध्याभावव्यापकसाधनाभावसामानाधिकरण्यरूपो व्यतिरेकव्याप्तिः, किन्तूक्तरूपा व्यतिरेकव्याप्तिः प्रकृतहेतौ न वर्त्ततेऽतस्तत्समन्वयार्थं साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिरितिगीयते, यत्र केवलान्वयव्याप्तिरेव वर्त्तते स हेतुः केवलान्वयी, तस्य पक्षसत्त्वसपक्षसत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि गमकताप्रयोजकानि, यथा इदं वाच्यं ज्ञेयत्वादित्यादौ, यत्र केवला व्यतिरेकव्याप्तिरेव स हेतुः केवलव्यतिरेकी, तस्य पक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि चत्वारि रूपाणि गमकताप्रयोजकानि, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ। यत्रान्वयव्यतिरेकव्याप्त्योरुभयोरपि भावः स हेतुरन्वयव्यतिरेकी, तस्य पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि पञ्च रूपाणि गमकताप्रयोजकानीत्येवं हेतुत्रैविध्यमवसातव्यम्। एतेनोक्तदिशा दृष्टान्तलक्षणप्ररूपणेन, अदृष्टान्ताः दृष्टान्तभिन्नाः साधर्म्यवैधर्म्यदृष्टान्तलक्षणानाक्रान्ताः निराकृताः, दृष्टान्ताभासाः साध्यविकल-साधनविकलोभयविकलादय

-दृष्टान्ताभासा उक्तलक्षणानालिङ्गितत्वान्निराकृताः प्रक्षिप्ता इत्यर्थः।

क्रमप्राप्तं सिद्धान्तं लक्षयतिः—

"प्रामाणिकोऽयमितिकृत्वाऽभ्युपगतोऽर्थः सिद्धान्तः। स चतुर्विध- परिसंख्यानात, तत्र वचनतो द्विविधः, सर्वतन्त्राभ्युपगतो वचनतः सर्वतन्त्रसिद्धान्त इत्येकः। नियततन्त्राभ्युपगतो वचनतः प्रतितन्त्रसिद्धान्त इति द्वितीयः। अर्थतोऽपि द्वेधा, तन्त्रानुमेयानुपक्तसिद्धिरधिकरणसिद्धान्तः। परतन्त्रोक्तः स्वतन्त्रे चानिषिद्धोऽभ्युयगमसिद्धान्तः"।

प्रामाणिकोऽयमितीति अयमर्थः प्रमाणसिद्ध इति बुद्ध्या वाऽऽकलय्याभ्युपगतः स्वीकृतोऽर्थः प्रमाणसिद्धस्यार्थस्याभ्युपगमो वा सिद्धान्त इत्यर्थः। स सिद्धान्तः, चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदेन चतुःप्रकारक इत्यर्थः। तत्र प्रमाणमाह परिसंख्यानादिति भगवता गौतममहर्षिणा 'तन्त्राधिकरणाभ्युपगमसंस्थितिःसिद्धान्तः' (अ० १। आ० १। सू० २६) इति सूत्रेण सिद्धान्तसामान्यलक्षणमभिधाय 'स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात' (अ० १। आ० १। सू०:२७) इति सूत्रे तस्य चतुर्विधतया परिगणनात्, अर्थान्तरभावादित्यस्य भेदादित्यर्थः। तत्र चतुर्विधेषु मध्ये, वचनतः शब्दतः द्विविधः द्विप्रकारः, तावेव प्रकारौ क्रमेणोपदर्शयति सर्वतन्त्रेति, नियततन्त्रेति च, एकः एकप्रकारकः, द्वितीयः द्वितीयप्रकारः, प्रमेयसिद्धिः प्रमाणाद्भवतीति सर्वतन्त्रेषु वचनतोऽभ्युपगतोऽर्थः सर्वतन्त्रसिद्धान्तः, उत्पत्तेः पूर्वं कारणे सदेव कार्यं कारणव्यापारतः प्रादुर्भवतीति वचनतः सत्कार्यवादाभ्युपगमः सांख्यस्य, उत्पत्तेः प्रागसदेव कार्यं कारणव्यापाराज्जायते इति वचनतोऽसत्कार्योत्पादाभ्युपगमोक्षपादादेरित्येवं प्रतितन्त्रं विभिन्नाभ्युपगमविषयोऽर्थो वचनतः प्रतितन्त्रसिद्धान्त इति निर्गलितोऽर्थः। अर्थतोऽपि द्वेधा शब्दतो यथा द्विप्रकारः तथाऽर्थतो द्विप्रकारः सिद्धान्तः। तत्र आद्यमधिकरणसिद्धान्तमाह तन्त्रेति तन्त्रेण शास्त्रेण आत्मनो योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरे नप्तृननुभवामीति प्रत्यभिज्ञयाऽनुमेयो क्षणभङ्गभङ्गः आत्मा न क्षणिकः पूर्वापरावस्थानुगतैकत्वप्रत्यभिज्ञाविषयत्वादित्यनुमानविषयीभूतस्तदनुषक्तस्य तत् सम्पृक्तस्य स्थिरात्मनः सिद्धिरधिकरणसिद्धान्त इत्यर्थः।' 'यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः' (अ० १। आ० १ सूत्र० ३०) इति सूत्रस्य भाष्ये 'यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधिष्ठानाः सोऽधि

करणसिद्धान्तः, यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति, अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्, अनियतविषयाश्चेतना इति पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति न तैर्विना सोऽर्थः सम्भवतीति' इत्थम्भाविनमत्रानुसन्धेयम्। सिद्धान्तस्यार्थतो द्वितीयप्रकारं लक्षयति परतन्त्रोक्त इति, यथा वैशेषिकदर्शने उक्तं मनस इन्द्रियत्वं गौतमदर्शने चानिषिद्धं भवत्यक्षपादानुयायिनामभ्युपगमसिद्धान्त इति।

क्रमप्राप्तमवयवं लक्षयतिः —

"नान्तरीयकप्रतिपादकवाक्यैकदेशा अवयवाः। ते पञ्च परिसङ्ख्यानात्। तत्र साध्यनिर्देशः प्रतिज्ञेति सुगमं सूत्रम्। साधनत्वाभिव्यञ्जकविभक्त्यन्तं लिङ्गवचनं हेतुः। धूम इत्यादिरूपस्य निराकरणाय प्रथमं पदम्, व्याप्तिवचनस्य हेतुत्वनिराकरणाय द्वितीयं पदम्, स द्विविधः साधर्म्यवैधर्म्याभ्याम्, विशिष्टमन्वयिलिङ्गवचनं साधर्म्यहेतुः। विशिष्टं केवलव्यतिरेकिलिङ्गवचनं वैधर्म्यहेतुः। व्याप्तिप्रदर्शनपुरःसरं सम्यग्दृष्टान्तवचनमुदाहरणम्। व्याप्तिप्रदर्शनेति अनुपदर्शितव्याप्तिकस्य घटवदिति दृष्टान्तमात्रस्य निरासः। तदपि द्विविधं दृष्टान्तभेदात्, स चोक्तः। धर्मिणि लिङ्गोपसंहार उपनयः। साध्योपसंहारो निगमनम्।"

नान्तरीयकेति, अवयवा इति लक्ष्यनिर्देशः, नान्तरीयकप्रतिपादकवाक्यदेशा इति लक्षणोक्तिः। अत्रैकदेशा इत्येतावन्मात्रोक्तो प्रमेयादेः प्रत्येकं सर्व एव पदार्था एकदेशा इति अवयवानात्मके घटादिपदार्थेऽतिव्याप्तिः, वाक्यैकदेशा इत्युक्तावपि न्यायभिन्नवाक्यैकदेशेष्ववयवानात्मकेष्वतिव्याप्तिः, प्रतिपादकवाक्यैकदेशा इत्युक्तौ चाप्रतिपादकाकाङ्क्षादिरहितवाक्यैकदेशानां वारणेऽप्याकांक्षासत्त्वादिमन्न्यायभिन्नवाक्यैकदेशेष्ववयवानात्मकेष्वतिव्याप्तिः स्यादतो नान्तरीयकत्वमपि वाक्यविशेषणम्, नान्तरीकत्वं व्याप्यत्वं तच्च प्रकृतेऽवान्तरत्वं तदपि परार्थानुमितिजनकपरामर्शजनकत्वेन विवक्षितम् तेन प्रकरणाह्निकाध्यायग्रन्थसन्दर्भाणां महावाक्यानामवान्तरवाक्यानि न्यायभिन्नान्यपीति तदैकदेशेष्ववयवानात्मकेषु नातिप्रसंगः, एकदेशत्वञ्च घटकत्वं तच्च तन्निरूपितविषयिताव्यापकविषयितानिरूपकत्वं, परार्थानुमितिजनकपरामर्शजनकत्वञ्चोचितानुपूर्वीकप्रतिज्ञा-

दिपञ्चकसमुदायलक्षणन्यायस्यैव, तथाचोक्तदिशा उचितानुपूर्वीकप्रतिज्ञादिपञ्चक-समुदायात्मकन्यायवाक्यनिरूपितविषयिताव्यापकविषयितानिरूपकवाक्यत्वमवयवस्य लक्षणं प्रकृतलक्षणवाक्याभिप्रेतमित्यर्थः। ऋजवस्तु प्रतिज्ञाहेतूदाहरणोप-नयनिगमनान्यतमत्वमवयवत्वमित्याहुः। 'ते अवयवाः,' पञ्च पतिज्ञाहेतूदाहरणो-पनयनिगमनभेदेन पञ्चसंख्याकाः,।

ननु जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासाः पञ्च, प्रतिज्ञादयः पञ्च तेषां मेलनेन दशावयवाः, प्रयोजनं हानादिबुद्धयः, तत्प्रवर्तिका जिज्ञासा, तज्जनकः संशयः, शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यम्, संशयव्युदासस्तर्कः, इत्येवं तात्पर्यटीकायां व्याख्याता इमे, तत् कथं पञ्चसंख्याका अवयवा इत्याशङ्काशङ्कुन्मू-लनायाह परिसंख्यानादिति भगवता महर्षिणा गौतमेन "प्रतिज्ञाहेतूदाहरणोपनय-निगमनान्यवयवाः" (अ० १। आ० १। सू० ३२) इति सूत्रेण पञ्चानामेवावयवानां परिगणनादित्यर्थः। भाष्ये चोल्लिख्य निराकृताः जिज्ञासादयोऽवयवतया, तथा च भाष्यम्:—"दशावयवानेके नैयायिका वाक्ये सञ्चक्षते,—जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनम् संसयव्युदास इति, ते कस्मान्नोच्यन्त इति, तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्त्तिका जिज्ञासा, अप्रतीयमानमर्थं कस्माज्जिज्ञासते? तं तत्त्वतो ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति, ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्व-ज्ञानस्यार्थस्तदर्थं जिज्ञासते, सा खल्वियमसाधनमर्थस्येति, जिज्ञासते, सा खल्विय-मसाधनमर्थस्येति, जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसङ्घातात् तत्त्वज्ञाने प्रत्यासन्नः, व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति, स पृथगुपदिष्टोऽप्य-साधनमर्थस्येति। प्रमातुः प्रामाणानि प्रमेयाधिगमार्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति। प्रयोजनं तत्त्वावधारणमर्थं साधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधेन तत्त्वज्ञा-नाभ्यनुज्ञानार्थम्, नत्वयं साधकवाक्यैकदेश इति। प्रकरणे तु जिज्ञासादयः समर्थाः अवधारणीयार्थोपकारात्, तत्त्वार्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति" इति। तत्र तेषु पञ्चसु अवयवेषु मध्ये, 'साध्य-निर्देशः प्रतिज्ञा' एवं स्वरूपं, सूत्रं प्रतिज्ञालक्षणप्रतिपादकं गौतमसूत्रम्, सुगमं सुखावबोधमित्यर्थः। अत्र साध्यनिर्देश इति लक्षणोक्तिः, प्रतिज्ञेति लक्ष्यनिर्देशः, साध्यस्य साधनीयस्य वह्निमत्त्वादिना पर्वतादेः निर्देशः पर्वतो वह्निमानित्याद्यात्मकं

वचनं प्रतिज्ञा, एतस्य साध्यांशे साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वे सति पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपित-साध्यतावच्छेदकावच्छिन्न-साध्यनिष्ठप्रकारतानिरूपकबोधजनकं न्यायान्तर्गतं वाक्यं प्रतिज्ञेति, न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्य-विषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं प्रतिज्ञात्वमितिवार्थः, न्यायान्तर्गतमित्यस्य न्यायान्तर्गतत्वे सतीत्यस्य वोपादाना-न्न्यायबहिर्भूते प्रकृतपक्षक-प्रकृतसाध्यक-बोधजनके वाक्ये नातिव्याप्तिः, साध्यांशे साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वे सतीत्यस्व प्रकृतपक्षतावच्छेद-कावच्छिन्नपक्षक-प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबो-धाजनकत्वे सतीत्यस्य वोपादानात् व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टबोधक-रूपे निगमने साध्यांशे साध्यतावच्छेदकातिरिक्तस्य व्याप्तपक्षधर्महेतुज्ञाप्यत्वस्य-प्रकारत्वान्नातिव्याप्तिरिति। हेतुं लक्षयति साधनत्वाभिव्यंजकविभक्त्यान्तमिति, अत्र हेतुरिति लक्ष्यनिर्देशः, अन्यल्लक्षणवचनम्, साधनत्वस्यानुमितिजनकत्वस्याभि-व्यञ्जिका या विभक्तिः पञ्चमी तृतीया वा तदन्तं लिङ्गवचनं लिङ्गप्रतिपादकः शब्दः धूमात् धूमेन वेत्यादिः हेतुः हेतुस्वरूपोऽवयव इत्यर्थः, धूम इत्यादिरूपस्य धूमः धूमं धूमाय धूमस्य धूमे इत्येवं प्रथमादिविभक्त्यन्तस्य, निराकरणाय हेत्ववयवत्ववारणाय, प्रथमं पदं साधनत्वाभिव्यञ्जकविभक्त्यन्तमितिवचनम्। व्याप्तिवचनस्य व्याप्ति-प्रतिपादकस्य यत्र यत्र धूमस्तत्र वह्निः यो यो धूमवान् स वह्निमान् इत्यादेः साधन-त्वाभिव्यञ्जकविभक्त्यन्तत्वाभावाद्वारणेऽपि वह्निधूमयोरविनाभावादित्यादेः, हेतुत्वनिराकरणाय हेत्ववयवत्वनिरासाय, द्वितीयं पदम् लिङ्गवचनमिति पदमित्यर्थः। स द्विविधः, साधर्म्यवैधर्म्याभ्याम् साधर्म्यहेतुः वैधर्म्यहेतुरित्येवं द्विप्रकारको हेतु-रित्यर्थः। तत्र साधर्म्यहेतुं लक्षयति विशिष्टमन्वयिलिङ्गवचनं साधर्म्यहेतुरिति, विशिष्टमभिधास्यमानोदाहरणग्राह्यान्वयव्याप्तिमत्तया प्रतिसन्धीयमानम्, अन्वयि-लिंगवचनं साध्यान्वयव्याप्तिमतोलिङ्गस्य वचनं साधर्म्यहेतुः, ज्ञातान्वयव्याप्तिकहेतु-बोधको हेत्ववयवः साधर्म्यहेतुरित्यर्थः। वैधर्म्यहेतुं लक्षयति विशिष्टं केवलव्यति-रेकिलिङ्गवचनं वैधर्म्यहेतुरिति, विशिष्टं अभिधास्यमानोदाहरणग्राह्यव्यतिरेक-व्याप्तिमत्तया प्रतिसन्धीयमानम्, केवलव्यतिरेकिणोऽन्वयव्याप्तिरहितव्यतिरेक-व्याप्तिमतो लिङ्गस्य वचनं वैधर्म्यहेतुः, ज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव-

वैधर्म्यहेतुरित्यर्थः। प्रथमलक्षणे अज्ञातव्यतिरेकव्याप्तिकज्ञातान्वयव्याप्तिकहेतु-बोधकत्वस्योपादाने केवलान्वयिहेतुलक्षणम्, द्वितीयलक्षणेऽज्ञातान्वयव्याप्तिकज्ञात-व्यतिरेक व्याप्तिकहेतुबोधकत्वस्योपादाने केवलव्यतिरेकिहेतुलक्षणम्, एतेन प्रतीता-न्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेकी हेतुरित्यपि सूचितमिति। उदाहरणं लक्षयति व्याप्तिप्रदर्शनपुरःसरं सम्यग् दृष्टान्तवचनमुदाहरणम् इति, व्याप्तेः साध्यहेतोः साध्याभावहेत्वभावयोर्वाऽविनाभावस्य यत् प्रदर्शनं कथनं तत्पु-रस्सरं तत्पूर्वकं प्रथमं तदभिधायेति यावत्, सम्यग् समीचीनतया, दृष्टान्तस्य साध्यहेतूभयवत्तया निश्चितस्योदाहरणस्य वचनं कथनमुदाहरणम्, व्याप्तिप्रदर्शन-पुरस्सरमित्युपादानप्रयोजनमाह व्याप्तिप्रदर्शनेतीति, व्याप्तिप्रदर्शनपुरस्सरमित्य-स्योपादानादित्यर्थः। अनुपदर्शितव्याप्तिकस्य क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वादि-त्यादिप्रयोगे अनुपदर्शिताऽनुद्भाविता व्याप्तिर्यस्य तस्य यद्यत् कार्यं तत् सकर्तृकमिति व्याप्तिवचनापुरस्कृतस्य घटवदिति दृष्टान्तमात्रस्य, निरासः उदाहरणावयवत्व-व्यवच्छेदः। तदपि उदाहरणमपि, द्विविधम् द्विप्रकारम्, दृष्टांतभेदात् साधर्म्य-दृष्टान्तवैधर्म्यदृष्टान्तभेदात्, यो यो धूमवान् स वह्निमान् यथा महानसमिति साधर्म्य-दृष्टान्तः, यो न वह्निमान् स न धूमवान् यथा ह्रद इति वैधर्म्यदृष्टान्त इति, सच दृष्टान्तभेदश्च, उक्तः दृष्टान्तलक्षणनिरूपणे पूर्वमुपदर्शितः। उपनयं लक्षयति धर्मिणि लिङ्गोपसंहारः उपनयइति, धर्मिणि पक्षे, लिङ्गोपसंहारः लिङ्गस्योदाहरणो-पदर्शितसाध्यव्याप्तिविशिष्टहेतोरुपसंहार उपसंहरणं वह्निव्याप्यधूमवानयं पर्वत इति तथा चायमिति वा उपनयः, व्यतिरेकव्याप्तिमत्तया हेतोरुपसंहारस्तु वह्न्यभाव-व्यापकीभूताभावप्रतियोगिधूमवाँश्चायमिति। केवलव्यतिरेकिणि न तथेयम् पृथिवी-तरत्वव्यापकगन्धाभाववती न पृथिवीत्युपसंहार उपनय इत्यर्थः। निगमनं लक्षयति साध्योपसंहारो निगमनमिति, धर्मिणीत्यनुवर्त्तते, धर्मिणि साध्यवचनं प्रतिज्ञाऽपि भवति तत्रातिव्याप्तिवारणाय "हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्" (अ० १ आ० १। सू० ३९) इति गौतमसूत्रे हेत्वपदेशादित्युक्तम्, तदनुसारेणात्रापि व्याप्तिविशिष्टपक्षधर्महेतोः कथनपुरस्सरं पक्षे साध्यस्योपसंहरणं निगमनम्, एतच्च व्याप्तपक्षधर्म्यहेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्तपक्षधर्महेतुज्ञाप्यसाध्य-विशिष्टपक्षबोधकस्तादृशसाध्यबोधको वा न्यायावयवो निगमनमित्यत्र पर्यवस्यति, अन्वयिनि तस्मात्तथेत्युपसंहारः, व्यतिरेकिणि तु तस्मान्न तथेत्युपशंहार इति।

तर्कनिर्णययोः क्रमेण लक्षणे आहः -

"व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्कः। परीक्षासाध्यमर्थावधारणं निर्णयः।

व्याप्याङ्गीकार इति, व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनमिति लक्षणकथतम्, तर्क इति लक्ष्यवचनम्। कुत्र व्याप्याङ्गीकारे व्यापकप्रसञ्जनमनिष्टमित्याकाङ्क्षा-निवृत्तये व्यापकाभाववत्तयानिर्णीते धर्मिणि इत्यवश्यमुपादेयम्, व्यापकाभाववर्तिनि च व्याप्याभावस्यैव सत्त्वं न तु व्याप्यस्येति तदङ्गीकार आहार्यारोपरूप एव, तेन च व्यापकप्रसञ्जनमपि तथैवाहार्यारोपरूपमिति तस्यानिष्टत्वमनुक्तमप्युपनिपततीति तदुपादानं स्वरूपोपरञ्जकमेव, इत्थं च व्यापकाभाववत्तया निर्णीते धर्मिणि व्याप्या-रोपेण व्यापकारोपस्तर्क इति पर्यवसितं लक्षणम्, ह्रदो यदि निर्वह्निः स्यान्निर्धूमस्स्या-दित्यस्य वारणाय मूलोक्तलक्षणेऽनिष्टेतिप्रसंगे विशेषणमुक्तं, पर्यवसितलक्षणे च व्यापकाभाववत्तया निर्णीते धर्मिणीत्यनेनैव तस्य वारणं, ह्रदरूपधर्मिणो धूमलक्षण-व्यापकाभाववत्तया निर्णीतत्वाभावात्, अनेनैवायोगोलकं यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादेरपि वारणम्, अयोगोलकं यदि निर्धूमः स्यान्निर्वह्निः स्यादित्यादेस्तु व्याप्यारोपेणेत्यस्योपादानादेव वारणं धूमाभावस्य वह्न्यभावाव्याप्यत्वाद्वह्न्यभाव-स्यापि धूमाभावाव्यापकत्वादिति। एवं निर्वह्निः स्यात् अद्रव्यं स्यात् इत्यादिवारणाया-पि तत्, यद्व्याप्यारोपाधीनस्तदारोप इत्यर्थगतये व्यापकेति, अप्रयोजकत्वादिशङ्का-कलङ्कितेन हेतुनाऽर्थस्य साधनमशक्यमतस्तदाशङ्कानिवर्त्तनं तर्कफलं, तेन यत्राप्रयोज-कत्वादिशङ्का नावतरति तत्र तर्को नापेक्षितव्यः। अस्यपञ्चविधत्वं वृत्तावुपदर्शितम्। तथा च तद्ग्रन्थः—

'स चायं पञ्चविधः, आत्माश्रयान्योन्याश्रयचक्रकानवस्थातदन्यबाधितार्थप्रसंग-भेदात्, स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः, स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा, यथा यद्ययंघटः एतद्घटजन्यः स्यात् तदा घटानधिकरणक्षणोत्तरवर्ती न स्यात्। यद्ययं घट एतद्घटवृत्तिः स्यादेतत् घटव्याप्यो न स्यात्, यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात्ज ज्ञानसामग्रीजन्यः स्यात्, एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम्। तदपेक्षापेक्षित्व-निबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः, सोऽपि पूर्ववत्त्रेधा। तदपेक्षापेक्षपेक्षितत्व-निबन्धनोऽनिष्टप्रसङ्गश्चक्रकम्, चतुः कक्षादावपि स्वस्य स्वापेक्षापेक्षापेक्षित्वसत्त्वा-न्नाधिक्यम्। अस्यापि पूर्ववत्त्रैविध्यम्। अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽ-

नवस्था, यथा यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। तदन्यबाधितार्थप्रसंगस्तु धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यादिः। प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकं तु प्रसङ्गानात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथाव्यवहार इति संक्षेपः' इति। निर्णयं लक्षयति परीक्षासाध्यमिति परमतनिराकरणपूर्वकं स्वमतस्थापनं परीक्षा, तया साध्यम्, एकधर्मिगतयोर्वादिप्रतिवाद्यभिमतयोः परस्परविरुद्धधर्मयोः संशयपुरःसरमेकस्य धर्मस्य दूषणगणोपनिपातेन निराकरणं विधाय स्वाभिमतस्य धर्मस्य परापादितदूषणोन्मूलनेन निर्दुष्टतापद्धतिमानीयतस्यार्थस्य यदवधारणं तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं तन्निर्णय इत्यर्थः। एतच्च लक्षणं जल्पवितण्डाकथान्यतरमाश्रित्यार्थावधारणाय, अन्यत्र तु तदभावाप्रकारकतत्प्रकारकज्ञानं निर्णयस्य लक्षणम्, उक्तं च भाष्ये:--

"न चायं निर्णये नियमो विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति, किन्त्विन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षेऽर्थावधारणं निर्णय इति, परीक्षाविषयेतु विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः, वादशास्त्रे च विमर्शवर्जमिति'। तथा च प्रत्यक्षतः शब्दाच्च निर्णये न परीक्षापेक्षेति तत्र परीक्षासाध्यमिति न देयमिति।

कथायांस्तद्भेदानां वादजल्पवितण्डानां लक्षणानि क्रमेणोपदर्शयतिः—

"साध्यव्यवस्थितये व्याहतविषयनानावक्तृकवाक्यसंदृब्धिः कथा। सा त्रिविधा, तत्र प्रामाणिकवचनमात्रवचनाभिप्रायपूर्विका कथा वादः विजिगीषुमाणयोरुभयोरपि साधनवती कथा जल्पः। सा प्रतिपक्षस्थापना हीना वितण्डेति सुगमं सूत्रम्।

साध्यव्यवस्थितय इति, साध्यव्यवस्थितये स्वस्वाभिमतार्थस्य तत्त्वनिर्णयविजयान्यतरस्य व्यवस्थितिर्यथावत्तत्स्वरूपावाप्तिस्तदर्थम्, व्याहतविषयस्य परस्परविरुद्धार्थकस्य नानावक्तृकस्य द्वाभ्यां वादिप्रतिवादिभ्यां मल्लप्रतिमल्लन्यायेन कथासङ्गरमभिलपद्भ्यामन्तरेण कथा न सम्भवतीत्येकवक्तृकस्य यद्वाक्यं स्वपक्षस्थापनपरपक्षखण्डनरूपं तस्य सन्दृब्धिः पूर्वं वादिना वक्तव्यं ततः प्रतिवादिना वक्तव्यमित्येवं पूर्वापरभावेन गुम्फनं व्याहतविषयनानावक्तृकवाक्यसन्दृब्धिः, कथा शास्त्रार्थ इत्यर्थः। वृत्तौ तु 'तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यन्यायानुगतवचनसन्दर्भः कथा, लौकिकविवादवारणाय न्यायेत्यादि, यत्रैकेन न्यायः प्रयुक्तोऽपरेण तु मतपरिग्रहोऽपि न-

कृतस्तद्धारणायायं विशेषणमिति, कथाधिकारिणस्तु तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवोऽकलहकारिणः कथौपयिकव्यापारसमर्था इतीति।' सा कथा, त्रिविधा वादजल्पवितण्डाभेदेन त्रिप्रकारा। तत्र त्रिविधासु कथासु मध्ये, प्रामाणिकवचनमात्रवचनाभिप्रायपूर्विका कथेति लक्षणनिर्देशः, वाद इति लक्ष्यनिर्देशः, प्रामाणिकैर्यथोच्यते तथा यद्वचनं तत् प्रामाणिकवचनं तन्मात्रं, न त्वाहार्यप्रमाणतयाऽवभासमानं वस्तुगत्याऽप्रामाणिकं वचनमेतादृशं यद्वचनं प्रमाणतर्काभ्यां स्वपक्षसाधनपरपक्षदूषणात्मकं सिद्धान्ताविरुद्धं पञ्चावयवोपपन्नं तदभिप्रायपूर्विका, कथा पक्षप्रतिपक्षपरिग्रहलक्षणा वाद इत्यर्थः। अस्य च तत्त्वनिर्णयः प्रयोजनम्। जल्पं लक्षयति विजिगीषमाणयोरुभयोरपि साधनवती कथा जल्प इति, विजगीषमाणयोः अन्योऽन्यविजयमभिलषतोः, उभयोरपि वादिप्रतिवादिनोरुभयोरपि, साधनवती स्वपक्षसाधनवती, कथा पक्षप्रतिपक्षपरिग्रहरूपा, जल्प इत्यर्थः, अत्र वादकथाव्यवच्छित्तये विजिगीषमाणयोरिति, वितण्डाव्यवच्छेदाय साधनवतीति। वितण्डां लक्षयति सा प्रतिपक्षस्थापनाहीना वितण्डेति, स प्रतिपक्षस्थापनाहीनो वितण्डेति पाठः समीचीनः, स जल्पैकदेशः, जल्पे वादी स्वपक्षं स्थापयति परपक्षं खण्डयति, प्रतिवाद्यपि स्वपक्षं स्थापयति परपक्षं खण्डयति, वितण्डायां च वादी स्वपक्षं स्थापयति परपक्षं खण्डयति च, प्रतिवादी तु परपक्षं खण्डयत्येव न तु स्वपक्षं स्थापयति, एवञ्च प्रतिवादिनः पक्षः प्रतिपक्षस्तत्स्थापनाहीनस्सन् तदन्यसकलजल्पलक्षणघटकविशेषणकलितो जल्पैकदेशो वितण्डेत्यर्थः। महर्षिगौतमप्रणीतं वितण्डालक्षणप्रतिपादकं 'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति सूत्रं सुगमं सुखावबोधं न व्याख्यानमपेक्षत इत्यर्थः। जल्पकथा कथं कर्त्तव्येत्याकाङ्क्षानिवृत्तये तदुपादानप्रकारो वृत्ताविस्थमुपदर्शितः, तथाहि 'अत्र चायं क्रमः-वादिना स्वपक्षसाधनं प्रयुज्य नायं हेत्वाभासस्तल्लक्षणायोगादितिसामान्यतः, नायमसिद्ध इत्यादिविशेषतो वा स्वपक्षदूषणे उद्धृते प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तमनूद्य, अनुक्तग्राह्याणामज्ञानाननुभाषणाप्रतिभानामसम्भवादेवालाभे उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकापार्थकानामलाभे, उक्तग्राह्याणां प्रतिज्ञाहानि-प्रतिज्ञान्तर-प्रतिज्ञाविरोध-प्रतिज्ञासन्न्यासहेत्वन्तराविज्ञातार्थ-विक्षेप-मतानुज्ञा-न्यूनाधिक-पुनरुक्त-निरनुयोज्यानुयोगापसिद्धान्तानामलाभे, पर्यनुयोज्योपेक्षणस्य मध्यस्थभाव्यत्वादेवानुपन्यासार्हतया यथासम्भवं

हेत्वाभासैः परोक्तं दूषयित्वा स्वपक्ष उपन्यसनीयः, ततो वादिना तृतीयकक्षाश्रितेन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तग्राह्योच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासम्भवं प्रतिवादिना स्थापना दूषणीया, अन्यथा क्रमविपर्यासे अप्राप्तकालम् अनवसरे दूषणोद्भावने च निरनुयोज्यानुयोगः—यथा त्यक्षति चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरमित्यादि, प्रतिज्ञाहान्यादिवद् हेत्वाभासानामुक्तग्राह्यत्वाविशेषेऽपि अर्थदोषत्वेनाप्रधानत्वाच्चरममनुसन्धानमितीति।

क्रमप्राप्तान् हेत्वाभासान् लक्षयतिः—

"अहेतवो हेतुवदाभासमाना हेत्वाभासा इति सुगमं भाष्यम्। ते पञ्च परिसंख्यानात्। तत्र अनैकान्तिकः सव्यभिचार इति सुगमं सूत्रम्। स च द्विविधः साधारणोऽसाधारणश्च। तत्र विपक्षवृत्तिः साधारणः, पक्षमात्रवृत्तिः विद्यमानसपक्षस्तु असाधारणः, साध्यविपर्ययव्याप्तो विरुद्धः, सप्रतिपक्षः प्रकरणसमः, असिद्धः साध्यसमः, स च अविद्यमानपक्षः, पक्षेऽविद्यमानः, अविद्यमानव्याप्तिक इति त्रिधा, वाधितविषयः कालातीतः"।

अहेतव इति, अहेतवः व्याप्तिपक्षधर्मतावल्लिङ्गभिन्नाः, हेतुवदाभासमानाः हेतुर्यथा पञ्चम्यन्तलिङ्गवचनेन भासते तथा पञ्चम्यन्तलिङ्गवचनेन भासमानाः, हेत्वाभासाः हेतुवदाभासन्त इति व्युत्पत्त्याश्रयणाद्दुष्टहेतव इत्यर्थः, अत्र हेतुवदाभासते यैस्ते हेत्वाभासा इति निरुक्त्याश्रयणे हेतुदोषा इति, सूत्रकृता दुष्टहेतूनामेव विभजनं कृतम्, न तु हेतुदोषाणामिति, तदनुरोधेन निरुक्तिः कृता। ते हेत्वाभासाः, पञ्च सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमकालातीतभेदेन पञ्चप्रकाराः।

ननु सव्यभिचारविरुद्धसाध्यसमभेदेन त्रिप्रकारा हेत्वाभासा वैशेषिकाभिमतास्त एव कथं न ग्राह्या इत्यत आह परिसंख्यानादिति, गौतममहर्षिणा 'सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः (अ० १। आ० २। सू० ४) इति सूत्रेण पञ्चविधतया परिगणनात् पञ्चहेत्वाभासा इत्यर्थः।

ननु बाधस्थले पक्षे हेतोरभावे स्वरूपासिद्धो भवति बाधितो हेतुरसिद्धः, पक्षे हेतुसद्भावे च साध्याभाववद्वृत्तित्वरूपव्यभिचाराक्रान्तत्वात् सव्यभिचार इत्येवमसिद्धे सव्यभिचारे वाऽन्तर्भावान्न बाधितोऽतिरिक्तः, बाधस्थल एव तद्व्याप्यः सत्प्रतिपक्षोऽवतरतीति यत्र बाधान्तर्भावस्तत्रैव सत्प्रतिपक्षान्तर्भावोऽपीति सत्-

प्रतिपक्षितोऽपि नातिरिक्त इति न पञ्चविधत्वमिति चेन्न, उत्पत्तिकालीनो घटो गन्धवान् पृथिवीत्वादित्यादौ न पक्षे हेत्वाभाव इति न स्वरूपासिद्धिः, नापि निरवच्छिन्नस्वरूपसम्बन्धेन गन्धाभावाधिकरणे जलादौ पृथिवीत्वं वर्त्तते इति न व्यभिचार, उत्पत्तिकालावच्छेदेन घटे गन्धाभावस्य सत्त्वाद् भवति बाध इति बाधितस्यासिद्धसव्यभिचाराभ्यां भवत्यतिरिक्तत्वम्, एवं स्वरूपासिद्धिव्यभिचारयो-र्व्याप्तिविशिष्टपक्षधर्मतावद्धेतुज्ञानात्मकपरामर्शप्रतिबन्धकज्ञानविषयत्वेन दोषत्वं, बाधस्य तु पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकज्ञानविषयत्वेन दोषत्वमि-त्यस्य साधकताबीजपार्थक्याद् भवति व्यभिचारासिद्धिभ्यां बाधो भिन्न इति तद्वान् बाधितोऽप्यसिद्धसव्यभिचाराभ्यां भिन्नो न तयोरन्तर्भवति, प्रकरणसमस्त्वनित्यो दोषो न नित्यासिद्धिव्यभिचारदोषयोरन्तर्भवितुमर्हतीति ।

ननु विरुद्धोऽपि दुष्टहेतुः सव्यभिचारोऽसिद्धः, एवमसिद्धोऽपि सव्यभिचारो विरुद्धः, एवं कश्चिद्दुष्टहेतुः सर्वदुष्टहेतुस्वरूपताभाजनं, यथा वायुर्गन्धवान् स्नेहादित्यादौ गन्धाभाववद्वृत्तित्वलक्षणव्यभिचारवत्त्वात् स्नेहः सव्यभिचार, गन्धव्यापकीभूता-भावप्रतियोगित्वलक्षणविरोधभाजनत्वाद्विरुद्धः, पक्षे वायौ स्नेहविरहाद् स्वभाववत्पक्ष-रूपस्वरूपासिद्धिमत्त्वादसिद्धः, पक्षे वायौ गन्धाभावात् साध्याभाववत्पक्षरूपबाधानुग-माद्बाधितः, गन्धव्याप्यस्नेहवान्वायुरिति साध्यव्याप्यवत्तापरामर्शकालीनो यो गन्धा-भावव्याप्यापाकजस्पर्शवान् वायुरितिपरामर्शस्तल्लक्षणसत्प्रतिपक्षदोषवत्त्वात् सत्-प्रतिपक्षित इत्येवं परस्परसङ्कीर्णतया दुष्टहेतूनां विभागो न सम्भवतीति चेत्, न, उपधेयानां दुष्टहेतूनां सङ्करेऽप्युपाधीनां दोषाणामसाङ्कर्यात् । न च दोषाणां विभिन्न-स्वरूपत्वात् स्वरूपेऽसाङ्कर्येऽप्येकाधिकरणवृत्तित्वेन साङ्कर्यमस्त्येवेति न दोषा दुष्टहेतु-विभाजकाः, सामान्यधर्मव्याप्यपरस्परविरुद्धनानाधर्मेण धर्मिप्रतिपादनं विभागः, दोषसामान्यात्मा च न कश्चिद्धर्मः, विसकलितानामपि तेषां दोषत्वेनानुगतीकृतानां कथंचित्सामान्यरूपतायास्सम्भवेऽपि तद्व्याप्याः व्यभिचारादयो दोषा एकाधि-करणवर्त्तिनोऽपि भवन्तीति न परस्परविरुद्धा इति तत्तद्रूपेण सव्यभिचारादिधर्मिणः प्रतिपादनं नोक्तविभागलक्षणाक्रान्तमिति वाच्यं, दोषाणामेव विभजनात्, सामान्य-धर्मो दोषत्वं तद्व्याप्याः परस्परविरुद्धा धर्मा व्यभिचारत्वादयस्तद्रूपैर्धर्मिणां व्यभि-चारादीनां प्रतिपादनं सम्भवतीति विभागलक्षणं सूपपन्नम्, दोषाणां पञ्चानां विभागे तद्वत्तया सव्यभिचारादयो दुष्टहेतवोऽपि विभक्ता भवन्तीति तेषां पञ्चविधतया

परिगणनं नानुपपन्नम्, दोषत्वं च यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वम्, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्त्वं दुष्टत्वमिति विवेकः। अत्र हेत्वाभाससामान्यस्वरूपस्पष्टप्रतिपत्त्युत्सुकशिष्यबुद्धिवैशद्याय नव्यनैयायिकपरिभावितं निरुक्तहेत्वाभाससामान्यलक्षणपरिष्करणं संक्षेपेणोपदर्श्यते, तथाहि यद्विषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयताकत्वेनेत्यर्थः, तृतीयार्थोऽवच्छेदकत्वं प्रतिबन्धकत्वान्वितमनतिरिक्तवृत्तित्वरूपं, तच्च स्वव्यापकतत्कत्वं, ज्ञानस्येत्यस्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वमर्थः तस्य तद्रूपावच्छिन्नविषयताकत्वेनेत्यनेनान्वयः, बाधकालीनेच्छाजन्यं स्वविरोधिधर्मितावच्छेदककस्वप्रकारकं वा ज्ञानमाहार्यं, यथा वह्न्यभाववान् ह्रदो, वह्निमान् इति तच्च न प्रतिबन्धकमित्यनाहार्येति, इदं ज्ञानमप्रमा अर्थात्तदभाववति तत्प्रकारकमित्याकारकाप्रामाण्यज्ञानास्कन्दितज्ञानं न प्रतिबन्धकमतोऽप्रामाण्यज्ञानानास्कन्दितेति, संशयज्ञानं न प्रतिबन्धकमिति तद्व्यवच्छेदाय निश्चयेति, अनुमितितत्करणान्यतरप्रतिबन्धकत्वमित्यत्रानुमितेरुपादानं बाधसत्प्रतिपक्षविरोधानां परामर्शाप्रतिबन्धकानां संग्रहाय, व्यभिचारस्वरूपासिद्धिहेत्वप्रसिद्धीनामनुमित्यप्रतिबन्धकानां संग्रहाय तत्करणेत्युपात्तम्, अनुमितौ लिङ्गोपहितलैङ्गिकभानमते साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारिकैवानुमितिः तत्प्रतिबन्धकत्वं च सर्वेषामपि दोषाणामिति तत्प्रतिबन्धकत्वेनैव सर्वेषां संग्रहात्, अथवा पक्षःसाध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिपरं मनुमितिपदम्, एवमप्युक्तसमूहालम्बनानुमितिप्रतिबन्धकत्वेनैव सर्वेषां संग्रह इत्यनुमितितत्करणान्यतरप्रतिबन्धकत्वमित्यस्य स्थानेऽनुमितिप्रतिबन्धकत्वमित्येव वाच्यम्, तस्य च प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रकारताकत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छेद्यहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठप्रकारतानिरूपकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वमित्यर्थः। तद्रूपमित्यस्य तद्रूपवत्त्वमित्यर्थः। एवञ्च अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताकत्वव्यापिका भवति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्य

तावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारताकत्वे सति प्रकृतसाध्यतावच्छेदकावच्छिन्न-
साध्यनिरूपितान्वयव्याप्तिव्यतिरेकव्याप्त्यनुगतव्याप्तित्वावच्छिन्नप्रकारतानिरूपित-
विशेष्यत्वावच्छेद्या हेतुतावच्छेदकसम्बन्धावच्छिन्न प्रकृतहेतुतावच्छेदकावच्छिन्नहेतु-
निष्ठप्रकारता तन्निरूपकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतातद्रूपवत्त्वं
हेत्वाभासत्वम् । बाधादौ लक्षणसमन्वये कर्त्तव्ये ह्रदो वह्निमान् धूमादित्यादौ वह्न्य-
भाववद्ध्रदत्वादिलक्षणबाधत्वादिकं यद्रूपपदेन धर्त्तव्यम्, ह्रदो ह्रदो वह्न्यभाववानित्या-
दिनिश्चयश्चानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपदेन ग्राह्यः । ह्रदो वह्निमान्
धूमादित्यादौ जातिमान् वह्न्यभाववानिति निश्चयेऽपि वह्न्यभाववद्ध्रदत्वावच्छिन्न-
विषयताकत्वसत्त्वेन जातिमान् वह्न्यभाववानितिनिश्चयवृत्तित्वविशिष्टवह्न्यभाव-
वद्ध्रदत्वावच्छिन्नविषयताकत्वव्यापिका न भवति प्रकृतानुमितित्वव्यापकप्रति-
बध्यतानिरूपितप्रतिबन्धकतेत्यसम्भवदोषवारणायाव्यापकविषयताशून्यत्वं निश्चये
विशेषणं देयम् । यदुतच्च यद्रूपावच्छिन्ननिरूपितविषयितासमानाधिकरणात्यन्ता-
भावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताशून्यत्वम्, एवं ह्रदो वह्निमान्-
धूमादित्यादौ वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय यद्रूपावच्छि-
न्नविषयताशालित्वविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वमनुमितिप्रति-
बन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्य-
त्वपर्यवसित विशिष्टद्वयघटितत्वमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चये-
विशेषणं देयम्, अन्यथा यद्रूपपदेन वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वमुपादाय
वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयकनिश्चयवृत्तित्वविशिष्टवह्न्य-
भाववज्जलवद्वृत्तिजलवद्ध्रदत्वावच्छिन्नविषयताकत्वव्यापिका प्रकृतानुमिति-
त्वव्यापकप्रतिबध्यतानिरूपिता जलव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धा-
वच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितजलावच्छिन्नविशेष्यताशालिनिश्चय-
विशिष्टजलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छि-
न्नप्रतिबन्धकता भवतीति वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदत्वरूपतद्रूप-
वत्त्वमुक्तविशिष्टेऽस्तीत्यतिव्याप्तिः स्यात्, उक्तविशेषणोपादाने च प्रथम-
यद्रूपपदेन वह्न्यभाववज्जलवत्त्वं द्वितीययद्रूपपदेन जलवद्ध्रदत्वमुपादाय वह्न्य-
भाववज्जलवत्त्वावच्छिन्नविषयताशालिनिश्चयविशिष्टजलवद्ध्रदत्वावच्छिन्नविष-
यताशालि-निश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यता-

प्रतिबन्धकतानतिरिक्तवृत्ति भवतीतिवह्न्यभाववज्जलवत्त्वावच्छिन्नविषयताविशिष्ट-जलवद्वृत्तित्वावच्छिन्नविषयताशून्यत्वस्य वह्न्यभाववज्जल वह्निजल वद्वृत्तिनिश्चयेऽभावान्नातिव्याप्तिरिति। धूमवान् वह्नेरित्यादौ मेयत्वविशिष्टधूमाभाववद्वृत्ति-वह्न्यादिरूपव्यभिचारादावतिव्याप्तिवारणाय विसिष्टान्तराघटितत्त्वं तद्रूपविशेषणं देयम्, तच्च स्वावच्छिन्नविषयित्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतासामान्याव-च्छेदकविषयितानिरूपकतावच्छेदकस्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छे-दकरूपावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकत्वम्, तदनुपादाने अनाहा-र्याप्रामाण्यज्ञानानास्कन्दितमेयत्वविशिष्टधूमाभाववद्वृत्तिवह्न्यादिविषयकनिश्चयवृ-त्तित्वविशिष्ट प्रमेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वाद्ययवच्छिन्नविषयताकत्वव्यापिका प्रकृतानुमितित्वव्यापकधूमाभाववद्वृत्तित्वनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नवि-शेष्यताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितधूमाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारता-निरूपितवह्नित्वावच्छिन्नविशेष्यताकनिर्णयत्वावच्छिन्नप्रतिबन्धकता भवति तद्रूपवत्त्वं मेयत्वविशिष्टधूमाबद्वृत्तिवह्न्यादौ समस्तीत्यतिव्याप्तिः, तदुपादाने च स्वपदेन मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वं गृहीतुं न शक्यते, यतः तदवच्छिन्नविषयित्वावच्छिन्नप्रकृतानुमितिप्रतिबन्धकतासामान्यावच्छेदक-विषयितानिरूपकतावच्छेदकं मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयि-ताशून्यप्रतीतिविषयतावच्छेदकं रूपं धूमाभाववद्वृत्तिवह्नित्वं तदवच्छिन्नविषयिता-शून्यप्रतीतिर्मेयत्वविशिष्टधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयकप्रतीतिर्न भवति किन्त्वन्या प्रतीतिस्तद्विषयतावच्छेदकत्वं मेयत्वशिष्टधूमाभाववद्वृत्तिवह्नित्वे नास्तीति नातिव्याप्तिरित्येवं दिशा हेतुदोषस्वरूपहेत्वाभाससामान्यलक्षणं शिरोमणि-गदाधरभट्टाचार्याद्युपदर्शितं ज्ञेयम्, विस्तरभयान्न तद्विवेचनमिह पल्लवितम्। उक्तदोषसामान्यलक्षणलक्षितानां दोषाणां पञ्चविधत्वात् तद्वन्तो दुष्टहेतवोऽपि हेत्वाभाससंशब्दिताः पञ्च गण्यन्ते तल्लक्षणानि क्रमेणोपदर्शयति:—

"तत्र अनैकान्तिकः सव्यभिचार इति सुगमं सूत्रमिति (अ० १ आ० २ सू० ४)

तत्र पञ्चसु हेत्वाभासेषु मध्ये, अनैकान्तिकः एकस्य साध्यस्य तदभावस्य वा योऽन्तः सहचारो व्याप्तिग्राहकः, स एकान्तः तद्वान् ऐकान्तिकः एकमात्रव्याप्तिग्राहक-सहचारवान् एकान्तिक इति यावत्, तदन्योऽनैकान्तिक इत्यर्थः। स सव्यभिचार इति। साध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितान्वयव्याप्तिनिष्ठप्रकारतानिरूप-

तद्धेतुतावच्छेदकावच्छिन्नहेतुनिष्ठविशेष्यताकत्वे सति साध्यतावच्छेदकावच्छिन्न-साध्यनिरूपितव्यतिरेकव्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठ-विशेष्यताकग्रहत्वव्यापक — साध्यतावच्छेदकविशिष्टसाध्यविषयकग्रहत्वाव्यापक-प्रतिबध्यतानिरूपितप्रतिबन्धकता अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्ववि-शिष्टयद्रूपावच्छिन्नविषयताकत्वव्यापिका भवति तद्रूपवत्त्वं व्यभिचारत्वं, तद्रूप-विशिष्टवत्त्वं सव्यभिचारत्वमित्येवं व्यभिचार सव्यभिचारयोर्लक्षणं ज्ञेयम् ।

सव्यभिचारं विभजते:—

"स च द्विविधः साधारणोऽसाधारणश्चेति" ।

स च अनैकान्तिकः पुनः, द्विविधः द्विप्रकारः, साधारणानैकान्तिकः असाधार-णानैकान्तिकश्चेत्यर्थः । केवलान्वयिपक्षतावच्छेदकावच्छिन्नपक्षको हेतुः अनुप-संहार्यनैकान्तिक इति तृतीयप्रकारोऽत्र नाश्रितः, सर्वमभिधेयं प्रमेयत्वादित्यादौ पक्षतावच्छेदकस्य सर्वत्वस्य केवलान्वयित्वे पक्षातिरिक्तस्य कस्यचिद्दृष्टान्तस्याभावात साध्यहेत्वोर्व्याप्तिर्गृहीतुं न शक्यत इति तत्र व्याप्तिग्रहाभावः स्वरूपसन्नेव व्याप्ति-ग्रहविरोधी नतु तज्ज्ञानं व्याप्तिग्रहप्रतिबन्धकमिति यज्ज्ञानं व्याप्तिविशिष्टपक्ष-धर्मताज्ञानस्यानुमितेर्वा प्रतिबन्धकं स एव दोषस्तद्वानेव दुष्ट इति तत्र दोषत्वस्याभा-वादुक्तानुपसंहारिणो न दुष्टत्वमित्यभिसन्धिः, केवलान्वयिसाध्यको हेतुरनुप-संहारी, यथा घटोऽभिधेयः प्रमेयत्वादित्यत्र अभिधेयत्वरूपकेवलान्वयिसाध्यकः प्रमेयत्वहेतुरनुपसंहारी, तत्र साध्यस्य वृत्तिमदत्यन्ताभावाप्रतियोगित्वं दोषः तज्ज्ञानस्य साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिग्रहप्रतिब-न्धकत्वात्, अत्यन्ताभावाप्रतियोगि साध्यमित्यत्यन्ताभावाप्रतियोगित्वप्रकारक-साध्यविशेष्यकज्ञाने सति यथाऽत्यन्ताभावप्रतियोगित्वप्रकारकसाध्यविशेष्यकज्ञानं न भवति तथा प्रतियोगितासम्बन्धेन साध्यप्रकारकात्यन्ताभावविशेष्यकज्ञानमपि न भवतीति भवति निरुक्तव्यतिरेकव्याप्तिज्ञानमभावे प्रतियोगितासम्बन्धेन साध्या-वगाहिनिरुक्तानुपसंहारिदोषज्ञानप्रतिबध्यमिति नव्यनैयायिकमते अनुपसंहार्य-नैकान्तिकोऽप्यनैकान्तिकस्य तृतीयप्रकार इति बोध्यम् । तत्र साधारणासाधार-णानैकान्तिकयोर्मध्ये, विपक्षवृत्ति- विपक्षो निश्चितसाध्याभाववान्, तत्र निश्चयांशो दूषकत्वे नोपयुज्यत इति साध्या-

भाववद्वृत्तिर्हेतुः साधारणानैकान्तिकः, विपक्षवृत्तिर्विरुद्धोऽपि तत्रातिव्याप्तिवारणाय सपक्षवृत्तित्वमपि लक्षणे निवेशनीयम्। दूषकतायां सपक्षवृत्तित्वं नोपयुक्तं किन्तु विपक्षवृत्तित्वमेवेत्यभिसन्धाय विपक्षवृत्तिरित्येतावन्मात्रं कथितम्; तेन विपक्षवृत्तित्वमात्रेण विरुद्धोऽपि भवतु साधारणानैकान्तिकः, किन्तु हेतुनिष्ठविपक्षवृत्तित्वं साधारणानैकान्तो दोषः हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वं विरोधो दोषः, तत्र साधारणानेकान्तस्य व्याप्तिज्ञानप्रतिबन्धकज्ञानविषयत्वं दूषकताबीजम्, विरोधस्यानुमितिप्रतिबन्धकज्ञानविषयत्वं दूषकताबीजमित्येवं तयोरसंकीर्णस्वरूपसाधारणानैकान्तिकविरुद्धयोः सङ्कीर्णत्वेऽपि न क्षतिः, उपधेयसङ्करेऽप्युपाधेरसांकर्यादिति, अयोगोलकं धूमवद् वह्नेरित्यत्र धूमाभाववद्वृत्तिर्वह्निः साधारणानेकान्तो दोषः स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तद्वत्त्वाद्वह्निः साधारणानैकान्तिकमिति। असाधारणानैकान्तिकस्य लक्षणं पक्षमात्रवृत्तिः विद्यमानसपक्षस्तु असाधारण इति। पक्षमात्रवृत्तिरित्यत्र मात्रपदोपादानात् सपक्षविपक्षोभयव्यावृत्तत्वं हेतोरनुगुणमेव नतुदूषकत्वेऽसाधकत्वलक्षणे प्रयोजकं, किन्तु सपक्षव्यावृत्तत्वमेव तथा, पक्षवृत्तित्वमपि नासाधकताङ्गम्, सपक्षश्च निश्चितसाध्यवान्, तत्र निश्चयोऽपि न प्रतिबन्धकतोपयोगी, तेन हेतोः साध्यासामानाधिकरण्ये साधारणानैकान्तः, तज्ज्ञानं च साध्यसामानाधिकरण्यघटितव्याप्तिज्ञानस्य साध्यसामानाधिकरण्यांशमुपादायप्रतिबन्धकमिति नव्यनैयायिकमतं, तन्मते दोषमात्रं नित्यमेवेति शब्दोऽनित्यः शब्दत्वादित्यत्रानित्यत्ववति शब्दे वृत्तित्वान्न शब्दत्वमसाधारणानैकान्तिकं, किन्तु जलं गन्धवत् स्नेहादित्यादौ स्नेहादिरेव तथा, तस्य साधारणानैकान्तविरोधादिभिन्नत्वेऽपि न क्षतिः। प्राचीनमते तु निश्चितसाध्यवद्व्यावृत्तत्वं निश्चयघटितमेवासाधारणानैकान्तिकत्वं यदा शब्दे नानित्यत्वनिश्चयः किन्तु घटादावनित्यत्वनिश्चयस्तदा शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दत्वमसाधारणानैकान्तिकं, शब्देऽनित्यत्वनिश्चयदशायां च निश्चितसाध्यवच्छब्दवृत्तित्वान्नासाधारणानैकान्तिकमित्येवमनित्योऽयं दोष इति, सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्य पक्षत्वात्पक्षातिरिक्तयोः सपक्षविपक्षयोरभावादेव तद्व्यावृत्तत्वं पक्षमात्रवृत्तित्वं च प्रमेयत्वस्येति तद्व्यावृत्तये विद्यमानसपक्षक इत्युक्तम्। नव्यतार्किकोक्तसाध्यवद्व्यावृत्तत्वलक्षणे तु न तस्य तत्रातिव्याप्तिरिति तदपि न देयमितिविभावनीयम्।

विरुद्धलक्षणमाहः—

"साध्यविपर्ययव्याप्तो विरुद्ध इति"

साध्यविपर्ययः साध्याभावस्तद्व्याप्तिर्व्यतिरेकव्याप्तिस्तद्वान् साध्यव्यापकीभूताभावप्रतियोगीति यावत्। विरुद्धः विरोधदोषवान् दुष्टो हेतुः, अत्र हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वलक्षणविरोधस्य ज्ञानं पक्षधर्मिकहेतुमत्ताज्ञानकालीनं सन्निश्चयविशिष्टनिश्चयत्वेन प्रकृतपक्षविशेष्यकप्रकृतसाध्यप्रकारकानुमितौ प्रतिबन्धकम्, यथा ह्रदो वह्निमान् जलादित्यत्र ह्रदो वह्निमानित्यनुमितिम्प्रति जलवान् ह्रद इति निश्चयविशिष्टो वह्निव्यापकीभूताभावप्रतियोगि जलमिति निश्चयः प्रतिबन्धकः, प्रतिबध्यप्रतिबन्धकभावश्च ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता जलत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टवह्निव्यापकीभूताभावप्रतियोगित्वनिष्ठप्रकारतानिरूपितजलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतेति। पूर्वोपदर्शितदोषसामान्यलक्षणे च निरुक्तानुमितिप्रतिबन्धकत्वेत्यस्य स्थाने निरुक्तानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वोभयाभावो निवेश्यः, तेन जलवान् ह्रद इत्याकारकपक्षधर्मिकहेतुमत्ताज्ञानशून्यकालीनस्य वह्निव्यापकीभूताभावप्रतियोगिजलमिति विरोधनिश्चयस्य प्रकृतानुमित्यप्रतिबन्धकत्वेऽपि न तत्राव्याप्तिः, हेतौ साध्यासामानाधिकरण्यं विरोधः हेतौ साध्यव्यापकीभूताभावप्रतियोगित्वञ्चासाधारणानैकान्त इति मते तु व्यभिचारलक्षणे विरोधान्यत्वे सतीति विशेषणं देयं, तेन न तस्य विरोधेऽतिव्याप्तिः, व्याप्तिज्ञानप्रतिबन्धकत्वमित्यस्य स्थाने व्याप्तिज्ञानाप्रतिबन्धकत्वासाधारण्याविषयकत्वोभयाभावो निवेश्य इति निरुक्तासाधारण्यज्ञानस्य व्याप्तिज्ञानाप्रतिबन्धकत्वेऽपि न तत्राव्याप्तिरिति बोध्यम्। निरुक्तविरोधदोषवत्त्वं विरुद्धत्वं ज्ञेयम्। न च सत्प्रतिपक्षस्य यथा साध्याभावग्रहसामग्रीत्वेन साध्यानुमितिप्रतिबन्धकत्वं तथा विरोधस्यापीति सत्प्रतिपक्षाविशेष इति शङ्क्यम्, सत्प्रतिपक्षे प्रतिहेतुः साध्याभावसाधकः, अत्र हेतुरेक एवेति विशेषात्, विरोधे साध्यसाधकत्वेनोपन्यस्त एव हेतुः साध्याभावसाधक इति वादिनोऽशक्तिविशेषोपस्थापकत्वादपि विशेषः।

सत्प्रतिपक्षं लक्षयतिः -

"सत्प्रतिपक्षः प्रकरणसम इति"

सत्प्रतिपक्षलक्षणप्रतिपादकं गौतमसूत्रं चेदम् 'यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः' ( अ० १ पा० २ । सू० ७ ) इति, एतत् सम्यगर्थावबोधिका वृत्तिश्चेत्थम्—"स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रकरणसम उच्यते, स च क इत्याकाङ्क्षायामाह यस्मात् प्रकरणचिन्तेति, 'प्रकरणं पक्षप्रतिपक्षौ' इति भाष्यम् साध्यतदभाववन्ताविति तदर्थः। तथा च निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्यस्तुल्यबलेन परेण प्रतिबन्धात्, किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति, चिन्तां जिज्ञासां प्रवर्त्तयति स प्रकरणसमः, यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा, को हेतुरनयोः साधकः कः परामर्शः प्रमेति वा यत्र जिज्ञासा भवतीत्यर्थः। यस्मादित्यादि तु वस्तुस्थितिमात्रम्, लक्षणन्तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम्, स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा विरोधिपरामर्शस्य स्वहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन, अन्यथा हेतोर्दुष्टत्वं न स्यात्, अयं च दशाविशेषे दोष इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम्" इति। इदञ्च प्राचाम्मतमुपपादितं वृत्तिकृता। एतन्मतमुपजीव्य सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स सत्प्रतिपक्ष इति व्युत्पत्तिमामनन्ति धीराः। अत्र साध्याभावव्याप्यवत्तापरामर्शः प्रकृतपक्षकप्रकृतसाध्यकानुमितिं निरुणद्धि साध्यव्याप्यवत्तापरामर्शस्तु प्रकृतपक्षविशेष्यकप्रकृतसाध्याभावप्रकारकानुमितिं प्रतिबध्नातीति सत्प्रतिपक्षस्थले परस्परानुमितिप्रतिबन्धः फलमिति प्राचीनानुयायिनः। घटाभावव्याप्यवत्ताज्ञाने सत्यपि लौकिकसन्निकर्षाद् घटवत्ताप्रत्यक्षं जायते, एवं कोटिद्वयव्याप्यवत्ताज्ञाने कोटिद्वयस्य संशयो भवति, पीतत्वाभावव्याप्यशङ्खत्ववान् अयमिति ज्ञाने सत्यपि दोषविशेषात् पीतः शङ्ख इति भ्रमो भवतीत्यतस्तद्वत्ताज्ञानसामान्ये तदभाववत्ताज्ञानतदभावव्याप्यवत्ताज्ञानयोर्न प्रतिबन्धकता, किन्तु विशिष्यैव तत्तद्वत्ताज्ञानं प्रति तत्तदभावतद्व्याप्यवत्ताज्ञानयोः प्रतिबन्धकत्वमिति परामर्शद्वयसमवधाने तत्तदभावयोरेकत्र धर्मिण्यनुमित्युत्पादकसामग्रीद्वयतस्तत्तदभावद्वयविषयकानुमितिः संशयात्मिका स्यादेव, यद्यपि संशयाकारानुमितित्वं न परामर्शकार्यतावच्छेदकं, तथाप्येकत्र धर्मिणि विरुद्धकोटिद्वयज्ञानं निर्णयात्मकं न सम्भवतीत्यतः साऽनुमितिः संशयात्मिकाऽर्थादेव भवति, यत्रैककोटिव्याप्यवत्ताज्ञानं तत्र द्वितीयकोटिभासकसामग्र्यभावादेव निर्णयात्मिकानुमितिः, न तु निर्णयत्वं लिंगपरामर्शजन्यतावच्छेदककोटौ निवेश्यते, तद्व्याप्यवत्ताज्ञानाभावविशिष्टस्य

तदभावव्याप्यवत्ताज्ञानस्य तद्वत्ताज्ञानं प्रति प्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानाभावविशिष्टस्य तद्व्याप्यवत्ताज्ञानस्य तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वमिति विशिष्यैव प्रतिवध्यप्रतिबन्धकभावः, एकैकपरामर्शसत्त्वे, द्वितीयकोटिभानप्रतिबन्धादेव द्वितीयकोटिभानासम्भवान्न संशयत्वमिति रत्नकोशकृन्मते सत्प्रतिपक्षस्य संशयाकारानुमितिजनकत्वमेव दूषकताबीजमिति। नव्यनैयायिकमते साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः, स च नित्य एव दोषः, तस्यानुमितिप्रतिबन्धएव फलम्, यथा ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभावव्याप्यजलवान् ह्रदो दोषः, तज्ज्ञानस्य बाधस्येव लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिम्प्रति अनाहार्यप्रामाण्यज्ञानानास्कन्दिततदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकत्वम्, यद्यपि यत्र ये दोषास्तद्व्याप्या अपि तत्रैवान्तर्भूता इतिबाधव्याप्यः सत्प्रतिपक्षोऽपि बाध एवान्तर्भवितुमर्हति, अन्यथा व्यभिचारासिद्ध्यादिव्याप्यवत्तानिश्चयानां व्याप्यादिज्ञानप्रतिबन्धकत्वेन हेत्वाभाससामान्यलक्षणाक्रान्ततया तद्विषयाणां व्यभिचारव्याप्यादीनां व्यभिचार-दोषावनन्तर्भूतानां हेत्वाभासान्तरत्वेन हेत्वाभासाधिक्यं स्यात्, तथापि तेषां स्वतन्त्रेच्छेन वियोगपर्यनुयोगानर्हेणाक्षपादमुनिना हेत्वाभासमध्ये पृथक्तयाऽपरिगणितत्वेन सत्प्रतिपक्षस्य पृथक्तया परिगणितत्वेनेत्थमुपपत्तेत इति।

साध्यसमं लक्षयतिः—

"असिद्धः साध्यसम इति"।

साधनीयत्वेन साध्येन वह्न्यादिनाऽविशिष्टो हेतुः साध्यसमः, अतएवासिद्ध इत्युच्यते तस्य त्रैविध्यमुपदर्शयति :-स चाविद्यमानपक्षः, पक्षेऽविद्यमानः, अविद्यमानव्याप्तिक इति त्रिधेति, अविद्यमानोऽसिद्धः पक्षो यस्य हेतोः सोऽविद्यमानपक्षः आश्रयासिद्धः पक्षे पक्षतावच्छेदकस्याभावः पक्षतावच्छेदकाभाववान् पक्षो वाऽऽश्रयासिद्धिः प्रथमोऽसिद्धिभेदः, यथा काञ्चनमयपर्वतो वह्निमान् धूमात्, गगनारविन्दं सुरभि अरविन्दत्वादित्यादौ पर्वते काञ्चनमयत्वाभावः काञ्चनमयत्वाभाववान् पर्वतो वा, अरविन्दे गगनीयत्वाभावो गगनीयत्वाभाववदरविन्दं वा पक्षासिद्धिराश्रयासिद्धिरितिचव्यवह्रियते, तज्ज्ञानञ्चानुमितिपरामर्शयोरुभयोरपि प्रतिबन्धकत्वम्। पक्षेऽविद्यमानः अवृत्तिःहेतुरितिपक्षवृत्तित्वाभाववान् हेतुः पक्षनिष्ठात्यन्ताभावप्रतियोगी वा हेतुः हेत्वभाववान् पक्षो वा द्वितीयोऽसिद्धिभेदः, स च द्विविधः, पक्षतावच्छेदकावच्छेदेन पक्षे हेत्वभावः पक्षतावच्छेदकसामानाधिकरण्येन पक्षे हेत्वभावश्च, प्रथमः स वह्न्या

सिद्धिः, द्वितीयो भागासिद्धिः ह्रदो द्रव्यं धूमवत्त्वादित्यादौ धूमाभाववद्ध्रदःस्वरूपासिद्धिः तज्ज्ञानस्य ह्रदत्वावच्छेदेनैव ह्रदे धूमाभावावगाहित्वात्, पृथिवीजले रूपवती गन्धवत्त्वादित्यादौ पृथिवीजलोभयं गन्धाभाववदिति भागासिद्धिः, पृथिवीरूपपक्षे गन्धसत्त्वेऽपि पक्षैकदेशे जले गन्धाभावात्, स्वरूपासिद्धिर्भागासिद्धिश्च परामर्शप्रतिबन्धकज्ञानविषयः। अविद्यमानव्याप्तिको अविद्यमाना व्याप्तिर्यत्र स हेतुरविद्यमानव्याप्तिकः व्याप्यत्वासिद्धिरिति व्यवह्रियते, अयं चासिद्धेस्तृतीयो भेदः, अयं च साध्यासिद्धिहेत्वसिद्धिव्यर्थविशेषणघटितहेतुभेदात्त्रिविधः, साध्यतावच्छेदकाभाववत्साध्यं साध्याप्रसिद्धिः, यथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ काञ्चनमयत्वाभाववान् वह्निः साध्यासिद्धिः, काञ्चनमयत्वाभाववान् वह्निरितिज्ञाने सति काञ्चनमयत्वविशिष्टवह्निनिरूपितव्याप्तिग्रहणं न सम्भवतीति, हेतुतावच्छेदकाभाववान् हेतुः साधनाप्रसिद्धिः, यथा पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्धूमस्साधनाप्रसिद्धिः, एतज्ज्ञाने सति काञ्चनमयत्वेन रूपेण धूमे वह्निनिरूपितव्याप्तिग्रहणं न जायत इति व्याप्तिग्रहप्रतिबन्धः फलम्, साध्याप्रसिद्धिस्त्वनुमितेरपि विरोधी, अयं तु न तथेति विशेषः, व्यर्थविशेषणघटितो हेतुर्व्याप्यत्वासिद्धः, यथा पर्वतो वह्निमान् नीलधूमादित्यत्र नीलधूमो हेतुः, तत्र गुरुतया साधनतावच्छेदकं न धूमत्वं न साध्यसम्बन्धितावच्छेदकमिति हेतुतावच्छेदकनिष्ठसाध्यसम्बन्धितानवच्छेदकत्वं व्याप्यत्वासिद्धिर्दोषस्तज्ज्ञाने जाते साध्यसम्बन्धितावच्छेदकहेतुतावच्छेदकवत्त्वरूपा व्याप्तिर्न गृह्यत इति तत्प्रतिबन्धोऽस्य फलम्, सोपाधिको हेतुर्व्याप्यत्वासिद्धिः इति हेतुनिष्ठसोपाधिकसाध्यसम्बन्धो व्याप्यत्वासिद्धस्तज्ज्ञाने जाते निरूपाधिकसाध्यसाधनसम्बन्धलक्षणव्याप्तिर्न गृह्यत इति तथाविधव्याप्तिग्रहणप्रतिबन्धोऽस्य फलम्, उपाधित्वञ्च साध्यव्यापकत्वे सति साधनाव्यापकत्वम् यथा पर्वतो धूमवान् वह्नेरित्यत्रार्द्रेन्धनप्रभवो वह्निरुपाधिः तत्सम्बन्धाद्वह्निः सोपाधिक इत्यपि कश्चित्, तथा च साध्याप्रसिद्धिसाधनाप्रसिद्धिहेतुतावच्छेदकनिष्ठसाध्यसम्बन्धितानवच्छेदकत्वहेतुनिष्ठसोपाधिकत्वैतदन्यतमत्त्वं व्याप्यत्वासिद्धेर्लक्षणम्, आश्रयासिद्धिस्वरूपासिद्धिनिरुक्तव्याप्यत्वासिद्ध्येतदन्यतमत्वमसिद्धिसामान्यलक्षणमिति बोध्यम्।

कालातीतं लक्षयति :—

'बाधितविषयः कालातीत' इति। बाधितः पक्षनिष्ठात्यन्ताभावप्रतियोगी,

विषयः साधनीयः साध्यमिति यावत् यस्य स हेतुः कालातीतः, साध्यस्य साधनकालः तमतीतोऽतिक्रान्तो यः स कालातीतः साध्याभावकाले प्रयुक्तो हेतुः, अतएव बाधितो हेतुः कालात्ययापदिष्ट इत्यप्युच्यते, लक्षणं तु साध्याभाववान् पक्षः पक्षे साध्याभावो वा बाधदोषः, स्वज्ञानविषयप्रकृतहेत्वावच्छेदकवत्त्वसम्बन्धेन तद्वान् हेतुर्बाधित इति, बाधज्ञानस्य साध्यानुमितिप्रतिबन्धकत्वेनानुमितिप्रतिबन्धोऽस्य फलम्। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतद्वत्ताज्ञानं प्रति अनाहार्याप्रामाण्यज्ञाना-नास्कन्दितद्धर्मिक तदभाववत्तानिश्चयः प्रतिबन्धक इत्येवं विशिष्टबुद्धिसामान्यम्प्रति क्लृप्तप्रतिबन्धकभावस्य बाधनिश्चयस्यानुमितिम्प्रति प्रतिबन्धकत्वम्. ह्रदो वह्निमान् धूमादित्यत्र वह्न्यभाववद्ध्रदो बाधः, तत्र ह्रदत्वावच्छिन्नविशेष्यतानिरूपित वह्नित्वा-वच्छिन्नप्रकारतानिरूपकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता वह्न्यभावत्वावच्छि-न्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूपकनिर्णयत्वावच्छिन्नप्रतिबन्धक-तेत्येवं प्रतिबध्यप्रतिबन्धकभाव इति।

क्रमप्राप्तं छलं लक्षयति :—

"अनभिप्रेतमर्थमभिमतं प्रकल्प्य अभिप्रेतविरोधेन तदुपपादनं छलम्। तत् त्रिविधं परिसंख्यानात्। तत्र वाक्यान्तरकल्पना यत्र तद्वाक्छलम्, यत्र उक्तस्य हेतुत्वादिकल्पना तत् सामान्यच्छलम्, यत्र उपचरितस्य मुख्यार्थकल्पना तदुपचार-च्छलम्।

अनभिप्रेतमर्थमिति, वक्तृतात्पर्याविषयमर्थमयमर्थो वक्तुरभिमतः इत्येवं स्वबुद्ध्-याऽभिमतं प्रकल्प्यैवं सत्यभिप्रेतविरोधइत्येवं दिशाऽभिप्रेतविरोधेन तदुपपादनं तद्दू-षणोपपादनं छलमित्यर्थः। वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानं छल-मिति मुकुलितोऽर्थः। अमुमर्थं पुरस्कृत्य वृत्तिकृतैवं सङ्गमितम्—तात्पर्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा, यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र हेतु-घटकस्य नवपदस्य नवीनार्थतात्पर्यकस्य तात्पर्याविषयनवसंख्यापरत्वकल्पनयाऽ-सिद्ध्यभिधानं नवकम्बलवत्त्वं नवसंख्यककम्बलवत्त्वं हेतुः स च पक्षीकृते पुरुषविशेषे नास्ति कम्बलद्वयवत्त्वमपि यत्र नास्ति तत्र कुतो नवसंख्यकम्बलवत्त्वस्य सम्भव इति स्वरूपासिद्धोऽयं हेतुरित्येवं दूषणाभिधानम्, अत्र नवसंख्यककम्बलरूपविशेष्ये तात्पर्याविषयत्वम्। एवं सर्वं प्रमेयं धर्मवत्त्वादित्यत्र धर्मत्वं येनकेनचित् सम्बन्धे-न वृत्तिमत्त्वं वक्तृतात्पर्यविषयो न तु पुण्यत्वमिति तात्पर्याविषयपुण्यत्वरूपार्थकल्पनया

तस्य हेतोः सर्वरूप-पक्षैकदेशे भागासिद्ध्यात्मक दूषणाभिधानम्, अत्र विशेषणे धर्मत्वे तात्पर्याविषयत्वम्। वह्निमान् धूमादित्यत्र संयोगसम्बन्धेन धूमो हेतुरिति हेतुतावच्छेदकसम्बन्धः संयोगस्तात्पर्यविषयो नतु समवायस्तथेति वक्तृतात्पर्याविषयसमवायसंसर्गरूपार्थकल्पनेन वह्न्यभाववति धूमावयवे समवायेन धूमो वर्त्तते इति धूमे व्यभिचारदोषस्याभिधानं छलमिति। तत् छलम् त्रिविधम् वाक्छलसामान्यच्छलोपचारच्छलभेदेन त्रिप्रकारम् कथमेवंनिर्णीतमित्याकाङ्क्षायामाह परिसंख्यानादिति 'तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति' (अ० १ पा० २ सू०) इत्यक्षपादसूत्रे निरुक्तत्रिप्रकारेण परिगणनादित्यर्थः। वाक् छलं लक्षयति तत्र वाक्यान्तरकल्पना यत्र तद्वाक्छलमिति, तत्र त्रिविधच्छलमध्ये, यत्र यस्मिन् समासवाक्ये सम्भवद्विग्रहद्वयवति, वक्तुरभिप्रेतं यद्विग्रहवाक्यं ततोऽन्यदन्यच्छलवाद्यभिमतं विग्रहान्तरवाक्यं तद्वाक्यान्तरं तस्य कल्पना तत्कल्पनानन्तरं कल्पितवाक्यार्थासम्भवप्रयुक्ततत्प्रतिषेधेन यद्दूषणं तत्वाकछलम्, यथा नवकम्बलोऽयं माणवक इति प्रयोगे नवः कम्बलो यस्येतिवक्तुरभिप्रेतं विग्रहवाक्यं नवकम्बलाः यस्येतिविग्रहान्तरवाक्यं तदर्थं प्राधान्यमुरीकृत्य छलवादी प्रतिषेधति एकोऽस्य कम्बलः कुतो नवकम्बला इति नवकम्बलोऽयं माणवक इत्यस्याभिधानम्। अत्र 'अविशेषाभिहितेऽर्थे-वक्तुरभिप्रायादर्थान्तरकल्पना वाक् छलम्' (अ० १ आ० २ सु० १२) इति गौतमसूत्रस्यार्थो वृत्तिकृता त्वेवमुपवर्णितः—यत्र वाक्यार्थद्वये संभवति एकार्थनिर्णायकविशेषाभावादनभिप्रेतवाक्यार्थकल्पनेन दूषणाभिधानं तद्वाक् छलम्, लक्षणन्तु शक्त्या एकार्थशाब्दबोधतात्पर्यकशब्दस्य शक्त्याऽर्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम्, यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसंख्याकाः कम्बला इति, गौर्विषाणीत्युक्ते वाणस्य विषाणम्, गजो विषाणीत्युक्त कुतो गजस्य शृंगम् श्वेतो धावति इति श्वेतरूपवत्त्वाभिप्रायेणोक्ते श्वा इतो न धावतीत्यभिधानमित्यादिकमूह्यमिति। सामान्यछलं लक्षयति यत्र उक्तस्य हेतुत्वादिकल्पना तत् सामान्यच्छलमिति, यत्र यस्मिन् वाक्ये उक्तस्य प्रतिपादितस्यार्थस्य हेतुत्वादिकल्पना, हेतुत्वादिकं कल्पयित्वा दूषणाभिधानं तत् सामान्यछलम्, यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इति वाक्ये उक्तस्य प्रतिपादितस्य विद्याचरणसम्पन्नत्वस्य ब्राह्मणहेतुत्वकल्पना यतोऽयं विद्याचरणसम्पन्नस्तस्माद् ब्राह्मण इतिकल्पना वक्त्रनभिप्रेतार्थस्य छलवाद्युत्प्रेक्षिता, ततः नहि विद्याचरणसम्पन्नत्वं ब्राह्मणत्वनिमित्तं व्रात्ये व्यभिचा-

रादितिदोषोद्भावनं सामान्यच्छलम्। अत्र सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ( अ० १ आ०२ सू० १३ ) इति गौतमसूत्रस्य वृत्तिरित्थम् : - सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्यातिसामान्ययोगादसम्भवदर्थकल्पनया दूषणाभिधानं सामान्यच्छलम्, यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसम्पत्, व्रात्ये व्यभिचारादिति, एतद्व्याख्याने ब्राह्मणत्वं हेतुतया कल्पितं विद्याचरणसम्पदिति साध्यतयाकलितं तत्र सूत्रार्थानुगुण्यमिति बोध्यम्। उपचारच्छलं लक्षयति यत्र उपचरितस्य मुख्यार्थकल्पना तदुपचारच्छलमिति उपचरितस्यान्यार्थे लाक्षणिकस्य शब्दस्य मुख्यार्थकल्पना शक्यार्थकल्पना, तया दोषोद्भावनमुपचारच्छलम्, यथा मञ्चाः क्रोशन्तीत्यादौ मञ्चस्थपुरुषादौ लक्षणया प्रयुक्तस्य मञ्चपदस्य मुख्यार्थस्य शक्यार्थस्य मञ्चरूपार्थस्य कल्पनया न मञ्चाः क्रोशन्ति किन्तु मञ्चस्थपुरुषा इत्यसत्यमुच्यते भवता मञ्चाः क्रोशन्तीत्येवं दूषणाभिधानमुपचारच्छलमिति। अत्र 'धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्' (अ० १ आ० २ सू० १४) इति गौतमसूत्रस्य वृत्तिरेवम्—धर्मः शब्दस्यार्थेन सम्बन्धः तस्य विकल्पो विविधः कल्पः शक्तिलक्षणान्यतररूपः, तथा च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम्, यथा मञ्चाः क्रोशन्ति नीलोघट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः, एवं घटस्य कथं नीलरूपाभेदः, एवमहं नित्य इति शक्त्या इत्युक्तेऽमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोऽप्युपचारच्छलमिति। अत्रैव वृत्तौ छलस्यासदुत्तरत्वमेवं भावितम्:—वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्, न च श्लिष्टलाक्षणिकप्रयोगाद्वादिन एवापराधः स्यादिति वाच्यम्, तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात्, अन्यथा पर्वतो वह्निमान् इत्युक्ते पर्वतोऽयं कथं वह्निमानित्यादिदूषणेनाग्न्युच्छेदः स्यादिति।

क्रमप्राप्तां जातिं लक्षयति—

"विवक्षितवाक्यार्थव्याहत्या दूषणाभासप्रसञ्जनं जातिः, कथायां तत्त्वाप्रतिपादकं निग्रहस्थानम्, वाद्युक्ते प्रत्यवस्थानं जातिः, गृह्यमाणविशेषत्वेन प्रकरणसमत्वेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः १, गृह्यमाणविशेषत्वेन प्रकरणसमत्वेन वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः २, साध्यदृष्टान्तयोर्धर्मवैचित्र्याद्विद्यमानधर्मान्तरारोपेण प्रत्यवस्थानमुत्कर्षसमः ३, साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् प्रतीतधर्मापवादनेन

प्रत्यवस्थानमपकर्षसमः ४, साध्यदृष्टान्तयोर्धर्मवैचित्र्याद् दृष्टान्तस्य ख्यापनीयत्व-प्रत्यवस्थानं वर्ण्यसमः ५, साध्यदृष्टान्तयोर्धर्मवैचित्र्यमात्राद्धर्मिणः ख्यापनीयत्वेन प्रत्यवस्थानमवर्ण्यसमः ६, साधनधर्मयुक्ते धर्मान्तरस्य दर्शनाद्धर्मिणि साध्यधर्मविकल्पेन प्रत्यवस्थानं विकल्पसमः ७, साध्यदृष्टान्तयोः धर्ममात्रहेतुनद् दृष्टान्ते यत्र अवयवानुमानप्रसञ्जनं साध्यसमः ८, हेतोः साध्यप्राप्त्या विशिष्टत्वेन प्रत्यवस्थानं प्राप्तिसमः ९ प्राप्तं साध्यमप्राप्य वेति विकल्प्याप्राप्त्यासाधकत्वेन प्रत्यवस्थानमप्राप्तिसमः १०, उभयसिद्धे प्रमाणमात्रप्रश्नापरिशिष्टतया प्रत्यवस्थानं प्रसङ्गसमः ११, एकहेतुयोनित्वेऽप्रतिदृष्टान्तेन प्रतिदृष्टान्तेन वा प्रत्यवस्थानं प्रतिदृष्टान्तसमः १२ अनुत्पत्तेः साध्यकारणाभावात् साध्यविपरीतोपपत्तौ साधनाभावेन प्रत्यवस्थानमनुत्पत्तिसमः, असद्दशायां वा कारणाभावात् प्रत्यवस्थानमनुत्पत्तिसमः १३. विशेषदर्शनान्निर्णये क्रियमाणे कुतश्चित् संशयहेतोर्धर्मिणि साध्यतद्विपरीतधर्मसंशयेन प्रत्यवस्थानं संशयसमः १४ प्रत्यनुमानेन स्थापनीयया प्रत्यवस्थानं प्रकरणसमः १५, प्रमाणप्रमेययोः परस्परापेक्षया मूर्तापरसहभावासिद्ध्या प्रत्यवस्थानमहेतुसमः १६, आभिमानिकार्थापत्तितो वाद्यभिप्रेतपक्षविपरीतोपवर्णनेन प्रत्यवस्थानमर्थापत्तिसमः १७, एकधर्मोपपत्तेरविशेषे तेन साधर्म्यादविशेषेण प्रत्यवस्थानमविशेषसमः १८, प्रकरणोपपत्तिमात्रेण प्रत्यवस्थानमुपपत्तिसमः १९, साध्यसिद्धौ निर्दिष्टस्य प्रमाणस्य भावेऽपि साध्योपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः २०, उपलब्धेरनुपलम्भादभावसिध्या प्रत्यवस्थानमनुपलब्धिसमः, विकल्पपुरस्सरं विषयगतस्वरूपारोपणाभावसिध्या प्रत्यवस्थानमनुपलब्धिसम इति वा। २१, सपक्षसाधर्म्याद्धर्मिणि सपक्षतुल्यधर्मोपपत्तेरभिमतसाध्यसमानधर्मवत्ताप्रसञ्जनेन प्रत्यवस्थानं नित्यसमः २२, धर्मिणि साध्यधर्मस्य नित्यानित्यविकल्पनेनानुपपत्त्या प्रत्यवस्थानमनित्यसमः २३, कार्यनानात्वानुमानात् प्रत्यवस्थानं कार्यसमः २४,॥

विवक्षितवाक्यार्थव्याहत्येति, जातिनिग्रहस्थानयोस्सामान्यतो भेदावगतये क्रमेण तयोः सर्वजात्यनुगतसर्वनिग्रहस्थानानुगते लक्षणे उद्भाविते, वादिनो विवक्षितो यो वाक्यार्थस्तस्य व्याहत्या प्रतीपार्थप्रसंगेन निराकृत्या दूषणाभासस्य प्रसञ्जनं जातिरिति सकलजातिविशेषानुगतं जातिलक्षणम्, कथायां वादजल्पवितण्डान्यतमरूपायां वादिप्रतिवाद्यन्यतरस्य यत्तत्त्वाप्रतिपादकं विप्रतिपत्त्यप्रतिपत्त्यन्यतरस्वरूप

तन्निग्रहस्थानमिति निखिलनिग्रहस्थानविशेषानुगतं निग्रहस्थानलक्षणम्। छलादि भिन्नं दूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिः, साधर्म्यसमादिचतुर्विंशत्य-न्यान्यत्वं जातित्वमित्यपि सर्वजात्यनुगतं प्रतिपत्तव्यम्, उद्देश्यानुगुणसम्यग् ज्ञाना-भावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा निग्रहस्थानसामान्यलक्षणं तदखिलविशेषा-नुगतमिति ॥ वाद्युक्ते सम्प्रत्यवस्थानं जातिरित्यस्य केनचित् सह साधर्म्येण वादिना प्रयुक्ते प्रतीपमवस्थानं वाद्यभिमतविरुद्धेन सह साधर्म्येण दूषणप्रसञ्जनं जातिः, एवं केनचित् सह वैधर्म्येण वादिना प्रयुक्ते प्रतीपमवस्थानं वाद्यभिमत-विरुद्धेन सह वैधर्म्येण दूषणप्रसञ्जनंजातिरित्यस्य चैकैकस्य न सर्वजातिव्यापकत्व-मित्यव्याप्तिः स्यादत उक्तान्यतरत्वं जातित्वमित्यर्थोऽवसेयः; छलादिवारणाय तद्भि-न्नत्वं तत्र देयमिति। जातेश्चतुर्विंशतिप्रकारेषु 'साधर्म्य-वैधर्म्योत्कर्षा-पकर्ष-वर्ण्या वर्ण्य-विकल्प-साध्यप्राप्त्यप्राप्ति-प्रसङ्गाप्रतिदृष्टान्तानुत्पत्ति-संशय - प्रकरणाहेत्वर्थाप-त्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्ध्यनित्यनित्यकार्यसमाः' (अ० ५ आ० १ सू० १) इतिसूत्रोपदिष्टेषु लक्ष्येषु क्रमेण लक्षणप्रतिपादने कर्त्तव्ये प्रथमं साधर्म्यसमप्रकारं लक्षयति गृह्यमाणविशेषत्वेन प्रकरणसमत्वेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसम इति, अत्र साधर्म्यसमात्मको जातिविकल्पो लक्ष्य इति पुंलिङ्गनिर्देशः। एवमग्रेऽपि, साधर्म्यसमाद्यात्मिकाया जातेरेव लक्ष्यतयाऽभिधाने तु साधर्म्यसमावैधर्म्यसमेत्यादि स्त्रीलिङ्गाभिधानमप्युचितमिति। गृह्यमाणं विशेषत्वं यत्र यस्य तद्गृह्यमाणवि-शेषत्वं तेन गृह्यमाणविशेषत्वेन प्रकरणस्यानुमानप्रकरणस्य प्रतिज्ञाहेत्वाद्युद्भावनस्य समत्वं यत्र तत्प्रकरणसमत्वं तेन प्रकरणसमत्वेन, एवंभूतेन साधर्म्येण प्रत्यवस्थानं-प्रतीपमवस्थानं दूषणप्रसञ्जनं साधर्म्यसमो जातिविकल्पः, साधर्म्यसमा जातिर्वेत्यर्थः। साधर्म्येणोपसंहारे वादिना कृते तद्विपरीतसाधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जाति-रिति निर्गलितोऽर्थः। यथा अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, यद्यदुत्पत्तिधर्मकं तदनित्यं यथा घटादीत्येवं वादिना प्रयुक्ते यद्यनित्यघटसाधर्म्यादनित्यः शब्दः तदा नित्येनाकाशेन सहाभूर्त्तत्वसाधर्म्येण शब्दो नित्यः प्रसज्येत इत्येवं दूषणप्रसञ्जनं साधर्म्यसमः, अत्र नित्येन सह साधर्म्यं गृह्यमाणविशेषत्वं प्रकरणसमत्वंच भवतीति तेन दूषणप्रसञ्जने उक्तलक्षणसमन्वयः।१। वैधर्म्यसमां जातिं लक्षयति गृह्यमाणविशे-षत्वेन प्रकरणसमत्वेन वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसम इति, अस्यापि दर्शित-दिशाऽर्थोऽवसेयः, वैधर्म्येण वादिनोपसंहारे कृते तद्विपरीतवैधर्म्येण प्रत्यवस्थानं

वैधर्म्यसमा जातिरित्यर्थेऽस्यापि पर्यवसानम्, यथा शब्दोऽनित्यः नित्याकाशवैधर्म्यात् घटवदिति वादिनोक्ते यदि नित्याकाशवैधर्म्योत्पत्तिधर्मकत्वतः शब्दोऽनित्यस्तर्हि अनित्यघटादिवैधर्म्यामूर्त्तत्वेन नित्य एव शब्दः किन्न स्यादिति दूषणप्रसञ्जनं वैधर्म्यसमा जातिः, एवं वादिना साधर्म्येणोक्ते साधर्म्येण प्रत्यवस्थानं साधर्म्यसमा जातिरिति व्यवस्थापितं, तथा वादिना वैधर्म्येणोक्ते साधर्म्येण प्रत्यवस्थानमपि साधर्म्यसमा जातिः, यथा शब्दोऽनित्यो नित्याकाशवैधर्म्योत्पत्तिधर्मकत्वादितिवादिनोक्ते यदि नित्याकाशवैधर्म्यादनित्यः शब्दस्तर्हि नित्याकाशामूर्त्तत्वसाधर्म्यान्नित्यः शब्दः प्राप्नोतीति साधर्म्यसमः, एवं वैधर्म्येण वादिना प्रयुक्ते वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिर्यथा प्रागुपपादिता तथा साधर्म्येण वादिनोक्ते वैधर्म्येण प्रत्यवस्थानमपि वैधर्म्यसमा जातिः, यथा घटादिगतोत्पत्तिकत्वसाधर्म्यादनित्यः शब्दः इति वादिनोक्ते यदि घटसाधर्म्यादनित्यः शब्दस्तर्हि घटवैधर्म्येणामूर्त्तत्वेन नित्योऽपि किन्न स्यादितिवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमा जातिः। उक्तं च वृत्तौ 'वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते, प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं साधर्म्यसमा, वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं वैधर्म्यसमा' इति।२। उत्कर्षसमं तृतीयं जातिविकल्पं लक्षयतिः - साध्यदृष्टान्तयोर्धर्मवैचित्र्यादविद्यमानधर्माध्यारोपेण प्रत्यवस्थानमुत्कर्षसम इति। साध्यते अत्र साध्यं पक्षः, तथा च साध्यदृष्टान्तयोःसाध्यदृष्टान्तान्यतरस्मिन्, धर्मस्य वैचित्र्यं क्वचित्सत्त्वं क्वचिदसत्त्वं, प्रकृते साध्यसाधनान्यतररूपस्य वैचित्र्यात् सत्त्वादन्योऽविद्यमानधर्माध्यारोपस्तेन प्रत्यवस्थानमर्थाद्व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनमुत्कर्षसमः। यथा शब्दोऽनित्यः कृतकत्वादितिवादिना स्थापिते प्रतिवादिनः अनित्यत्वं कृतकत्वं च घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यादित्यादिप्रसञ्जनमुत्कर्षसमाजातिरिति।३। अपकर्षसमां जातिं लक्षयतिः—साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् प्रतीतधर्मापवादेन प्रत्यवस्थानमपकर्षसम इति। पूर्ववत् पक्षदृष्टान्तयोर्धर्मस्य सहचरितधर्मस्य वैचित्र्यादसत्त्वात् प्रतीतधर्मापवादेनसाध्यसाधनान्यतरापवादेन प्रत्यवस्थानं हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा जातिः। यथा शब्दोऽनित्यः कृतकत्वाद्घटवदिति स्थापनायां प्रतिवादिनो यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च

व्यावृत्तिः स्यात्, एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावप्यनित्यत्वसहचरितगुणत्वस्य दृष्टान्ते घटे व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वं च व्यावर्त्तेतेत्यपकर्षसमा जातिरिति ।४। वर्ण्यसमां जातिं लक्षयतिः—साध्यदृष्टान्तयोर्धर्मवैचित्र्याद् दृष्टान्तस्य ख्यापनीयत्वमात्रेण प्रत्यवस्थानं वर्ण्यसम इति, अत्र साध्यः सिद्धद्वयभाववान् सन्दिग्धसाध्यकादिर्वा, दृष्टान्तस्तु यथाश्रुतः तयोर्धर्मस्सन्दिग्धसाध्यकादिवृत्तिर्हेतुस्तस्य वैचित्र्यात्सत्त्वाद्दृष्टान्तस्य ख्यापनीयत्वमात्रेण संदिग्धसाध्यकत्वलक्षणवर्ण्यत्वमात्रेण प्रत्यवस्थानमर्थात्सन्दिग्धसाध्यकत्वस्यापादनं वर्ण्यसमा जातिः। यथा पर्वतो वह्निमान्धूमान्महानसवदिति वादिनः स्थापनायां, प्रतिवादिनः पक्षवृत्तिर्हि हेतुर्गमकः पक्षश्च सन्दिग्धसाध्यकः, तथा च सन्दिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्यः, तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वं स्यादित्यापादनं वर्ण्यसमा जातिरिति ॥५॥ अवर्ण्यसमां जातिं लक्षयतिः—साध्यदृष्टान्तयोर्धर्मवैचित्र्यमात्राद्धर्मिणः ख्यापनीयत्वेन प्रत्यवस्थानमवर्ण्यसम इति। साध्यदृष्टान्तयोरुक्तस्वरूपयोः दृष्टान्तस्य सिद्धसाध्यद्वयस्य यो धर्मो हेतुस्तस्य वैचित्र्यमात्रात् सत्त्वाद्धर्मिणः पक्षस्य ख्यापनीयत्वेनासन्दिग्धसाध्यकत्वेन प्रत्यवस्थापनं पक्षेऽसंदिग्धसाध्यकत्वापादनमवर्ण्यसमा जातिः। यथा शब्दोऽनित्यः कृतकत्वाद्घटवदिति वादिनः स्थापनायां दृष्टान्ते घटे हेतोः कृतकत्वस्य सिद्धसाध्यकवृत्तित्वस्य धर्मस्य वैचित्र्यमात्रात्सत्त्वमात्रात् पक्षस्य शब्दस्य ख्यापनीयत्वेनासंदिग्धसाध्यकत्वेन प्रत्यवस्थापनं घटवत् शब्दोऽप्यसंदिग्धानित्यत्वधर्मकः स्यादिति शब्दस्यासन्दिग्धानित्यत्वधर्मवत्त्वापादनमवर्ण्यसमा जातिरिति ॥६॥ विकल्पसमां जातिं लक्षयति साधनधर्मयुक्ते धर्मान्तरस्य दर्शनाद्धर्मिणः साध्यधर्मविकल्पेन प्रत्यवस्थानं विकल्पसम इति। साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरस्य साध्यभिन्नधर्मस्य दर्शनाद्धर्मिणि पक्षे साध्यधर्मस्य विकल्पो विरुद्धः कल्पस्तेन प्रत्यवस्थानमनिष्टापादनं विकल्पसमा जातिः। यथा शब्दोऽनित्यः उत्पत्तिधर्मकत्वाद्घटवदित्युक्ते उत्पत्तिधर्मकत्वधर्मयुक्ते घटे धर्मान्तरस्यानित्यत्वभिन्नधर्मस्याविभागजत्वस्य विभागजशब्दव्यावृत्तस्य दर्शनाद्घटगतो यो धर्मस्स शब्दे भवतीत्यस्य व्यभिचाराद्धर्मिणि शब्दे साध्यधर्मानित्यत्वस्य विरुद्धः कल्पो नित्यत्वं तेन प्रत्यवस्थानं शब्द उत्पत्तिधर्मकोऽपि विभागजो घटस्त्वविभागजः एवं घट उत्पत्तिधर्मकोऽनित्यः शब्दस्तूत्पत्तिधर्मकोऽपि नित्यः स्यादित्यापादनं विकल्पसमा जातिरिति ॥७॥ साध्यसमां जातिं लक्षयतिः—साध्यदृष्टान्तयोर्धर्ममात्रहेतुत-

द्दृष्टान्ते यत्रावयवानुमानप्रसञ्जनं साध्यसम इति। साध्यदृष्टान्तयोः पक्षदृष्टान्तयोः पक्षेऽनित्यत्वानुमितिविषयत्वे दृष्टान्तेऽप्यनित्यत्वानुमितिविषयत्वं वाच्यमन्यथा दृष्टान्तेऽनित्यत्वासिद्धौ पक्षेऽपि तद्बलादनित्यत्वं न स्यादतो धर्ममात्रं किञ्चिद्दृष्टान्तेऽनित्यत्वसाधकम् एवं दृष्टान्ते किञ्चित् तद्व्याप्तिग्रहास्पदमितिधर्ममात्रहेतुतद्दृष्टान्ते सति यत्र दृष्टान्तहेत्वादावनुमितिविषयत्वसाधनाय अवयवानुमानस्य प्रतिज्ञादिपञ्चकावयवानुमानस्य ऽसञ्जनमापादनं साध्यसमा जातिः। यथा शब्दोऽनित्यः उत्पत्तिधर्मकत्वाद् घटवदिति वादिनः स्थापनायां प्रतिवादिन इत्थं प्रत्यवस्थानं यदि घटरूपदृष्टान्तोत्पत्तिधर्मकत्वरूपहेतुबलेन शब्दस्यानित्यत्वानुमितिविषयत्वं तदोक्तदृष्टान्तहेत्वादेरप्यनुमितिविषयत्वोपपादनाय दृष्टान्तान्तरहेत्वन्तरादेरपेक्षणीयत्वे सति तत्र शब्देऽनित्यत्वानुमित्यर्थं प्रतिज्ञाद्यवयवपञ्चकवत् प्रतिज्ञाद्यवयवपञ्चकानुमानं स्यादिति प्रसञ्जनं साध्यसमा जातिरिति। वृत्तौ चैवमभिहितम् 'पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनं साध्यसमा।' तत्रायमाशयः—एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम्, तथा च पक्षादेरनुमितिविषयत्वान् साध्यवदेतत्प्रयोगसाध्यत्वम्; अतः साध्यसमा। तथाहि पक्षादेः पूर्वसिद्धत्वे एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वम्, 'पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयस्तद्देशनायाः सा चेयमिति ॥८॥ प्राप्तिसमां जातिं लक्षयतिः—हेतोः साध्यप्राप्त्याऽविशिष्टत्वेन प्रत्यवस्थानं प्राप्तिसम इति, हेतोरित्यनन्तरं साधकत्वमिति शेषः। तथा च हेतोः साधकत्वं साध्यप्राप्त्याऽविशिष्टत्वेन यथा साध्यस्य प्राप्तिस्तथा हेतोरपि प्राप्तिरित्येवं साध्यहेत्वोः प्राप्तत्वाविशेषात् किं कस्य साधकमित्येवं प्रसञ्जनं प्राप्तिसमा जातिरिति ॥९॥ अप्राप्तिसमां जातिं लक्षयतिः—प्राप्य साध्यम् अप्राप्य वेति विकल्प्याप्राप्त्याऽसाधकत्वेन प्रत्यवस्थानमप्राप्तिसम इति। हेतुः प्राप्य साध्यं साधयति, वाऽथवा अप्राप्य साध्यं साधयतीति विकल्प्य प्रथमपक्षे प्राप्तिसमा जातिदर्शिता। द्वितीयपक्षेऽतिप्रसंगादप्राप्तस्य न साधकत्वमित्येवमसाधकत्वेन प्रत्यवस्थानमप्राप्तिसमा जातिरिति। प्राप्तिसमाऽप्राप्तिसमयोरेकेन सन्दर्भेण वृत्तावेवंनिगदितम्:—'साधकत्वं चात्र कारकज्ञापकसाधारणम्। एवं च कारकज्ञापकलक्षणं साधनं कार्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं तत् साधकं चेत् तदा सत्त्वाविशेषान्न कार्यकारणभावः, तत्सम्बन्धस्य प्रागेव ज्ञातत्वाच्च ज्ञाप्यज्ञापकभावः, वस्तुतो ज्ञापकत्वं ज्ञप्तिजनकत्वं तदपि तावतैव प्रत्युक्तम्, प्राप्तयोर्न जन्यजनकभावः, प्राप्तत्वेन लवणोदकयोरिवाभेदादित्या-

शय इत्यन्ये, तथा च प्राप्याऽपि विशेषादनिष्टापादनेन प्रत्यवस्थानं प्राप्तिसमा। यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किन्न जनयेत् अप्राप्तत्वाविशेषात्, तथा चाप्राप्त्या साधकत्वादनिष्टापादनमप्राप्तिसमेति ॥१०॥ प्रसंगसम जातिं लक्षयतिः—उभयसिद्धे प्रमाणमात्रप्रश्नापरिशिष्टतया प्रत्यवस्थानं प्रसङ्गसम इति। उभयसिद्धे वादिप्रतिवाद्युभयसिद्धे दृष्टान्ते, प्रमाणमात्रप्रश्नस्य दृष्टान्ते साध्यवत्त्वे किं प्रमाणमिति प्रश्नस्य, अपरिशिष्टतया पर्यवसितः परिशिष्टः न परिशिष्टोऽपरिशिष्टः तस्य भावोऽपरिशिष्टता तया अपरिशिष्टतयाऽनवस्थिततयेति-यावत्, प्रत्यवस्थानं प्रसञ्जनं, दृष्टान्ते साध्यवत्त्वसिद्धये यत् किमपि प्रमाणं दर्शनीयं तत् परम्प्रत्यनुमानविधयैव प्रयोगपथमवतरति तत्रापि प्रमाणे यद्दृष्टान्तं तत्रापि प्रमाणप्रश्ने दृष्टान्ताकलितं प्रमाणमित्येवमनवस्थापादनं प्रसंगसमा जाति॥११॥ प्रतिदृष्टान्तसमां जातिं लक्षयतिः—एकहेतुयोनित्वे प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। प्रतिदृष्टान्तेन वा प्रत्यवस्थानं प्रतिदृष्टान्तसम इति। एकहेतुयोनित्वे एकहेतुकारणत्वे सति प्रतिदृष्टान्तबलेन प्रत्यवस्थानं प्रसञ्जनं प्रतिदृष्टान्तसमा जातिः, वा अथवा प्रतिदृष्टान्तेनेति सावधारणं, तथा च प्रतिदृष्टान्तमात्रबलेन व्याप्तिमपुरस्कृत्य प्रत्यवस्थानं प्रसञ्जनं प्रतिदृष्टान्तसमा जातिः। यथा यदि घटदृष्टान्तबलेनाऽनित्यः शब्दस्तदाऽऽकाशदृष्टान्तबलेन नित्यः किं न स्यादित्यापादनं प्रतिदृष्टान्तसमा जातिरिति।१२। अनुत्पत्तिसमां जातिं लक्षयतिः—अनुत्पत्तेः साध्यकारणाभावात् साध्यविपरीतोपपत्तौ साधनाभावेन प्रत्यवस्थानमनुत्पत्तिसमः। असद्दशायां वा कारणाभावात् प्रत्यवस्थानमनुत्पत्तिसमः इति। अनुत्पत्तेः साध्यकारणाभावात् साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् साध्यस्योत्पत्तिकारणाभावात् साध्यस्यानुत्पत्तेः साध्यविपरीतोपपत्तौ साध्यविपरीतस्योपपत्तौ सत्यां साधनाभावेन कारणाभावेन, प्रत्यवस्थानमनिष्टप्रसञ्जनमनुत्पत्तिसमा जातिः। वा अथवा, पूर्वलक्षणे साध्यविपरीतोपपत्तावित्यस्य स्थाने असद्दशायां इत्यस्याभिषेकः अन्यत् सर्वं पूर्वलक्षणस्थवदेव। तथा च साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक कारणाभावात् साध्यस्यानुत्पत्तेः साध्यस्यासद्दशायामुत्पत्तौ कारणाभावेन प्रत्यवस्थानमनुत्पत्तिसमा जातिरिति द्वितीयः कल्पः। यथा शब्दोऽनित्यः कृतकत्वाद् घटवदिति वादिना स्थापनायां प्रतिवादिनः शब्दस्यानित्यत्वेऽनित्यशब्दधर्मोऽनित्यत्वमप्यनित्यमेवाभ्युपेयम्। धर्मिणोऽभावे धर्मासम्भवात्। एवञ्च साधनाङ्गशब्दकृत-

रूपवघटानामुत्पत्तेः प्राक्कारणाभावात् साध्यस्यानित्यत्वस्यानुत्पत्तेस्तद्विपरीतस्य नित्यत्वस्योपपत्तौ नित्यत्वं नित्यमेवेति तत्कारणाभावेन प्रत्यवस्थानमथवा एतदनित्यत्वस्यान्यानित्योत्पत्तिरसदृशैवोत्पत्तिरित्यस्यापि कारणाभावात् प्रत्यवस्थानमनुत्पत्तिसमाजातिरित्यर्थः। अत्र 'प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः' (अ० पा० १ सू० १२) इतिगौतमसूत्रस्य वृत्तिरित्थम्:—प्रागुत्पत्तेरिति साधनाङ्गतयेति शेषः। कारणाबात् हेत्वभावात्, तथा च साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः। घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः। पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः, एवमाद्यक्षणे रूपाभावाद्बाधश्च, अनुत्पत्त्याप्रत्यवस्थानस्यैव तत्रापि सत्त्वात्, उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात्, जातित्वे सतीति च विशेषणीयम्, तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यत्र बाधेन प्रत्यवस्थाने नातिव्याप्तिः, असिद्ध्यादिदेशनाभासा चेयमिति॥१३॥ संशयसमां जातिं लक्षयति विशेषदर्शनान्निर्णये क्रियमाणे कुतश्चित् संशयहेतोः धर्मिणि साध्यतद्विपरीतधर्मसंशयेन प्रत्यवस्थानं संशयसम इति, स्पष्टम्। यथाऽनित्यत्वव्याप्योत्पत्तिमत्त्वलक्षणविशेषदर्शनाच्छब्देऽनित्यत्वनिर्णये वादिना क्रियमाणे प्रतिवादिना नित्यानित्यव्यावृत्तशब्दत्वलक्षणासाधारणधर्मदर्शनलक्षणसंशयकारणाद्धर्मिणि शब्दे अनित्यत्वतद्विपरीतनित्यत्वधर्मसंशयेन प्रत्यवस्थानं संशयसमा जातिरिति॥१४॥ प्रकरणसमां जातिं लक्षयति प्रत्यनुमानेन स्वपक्षनीत्या प्रत्यवस्थानं प्रकरणसम इति। प्रत्यनुमानेन वादिसाध्यविरुद्धसाध्याभावसाधकानुमानेन स्वपक्षनीत्या प्रतिवाद्यभिमतधर्मसाधकयुक्त्या प्रत्यवस्थानं प्रसञ्जनं प्रकरणसमा जातिः। यथा शब्दोऽनित्य उत्पत्तिधर्मकत्वाद्घटवदिति वादिनः स्थापनानुमाने प्रतिवादिनः प्रत्यनुमानेन शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदित्यनेन नित्यत्वसाधकयुक्त्या प्रत्यवस्थानं प्रकरणसमा जातिः। अस्याधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमा जातिरित्यत्र पर्यवसानं, तेन हेत्वाभासमध्ये परिगणितस्य प्रकरणसमस्य तुल्यबलतया न तत्रातिव्याप्तिरिति बोध्यम्॥१५॥ अहेतुसमां जातिं लक्षयति:—प्रमाणप्रमेययोः परस्परापेक्षया मूर्तापरसहभावासिद्ध्या प्रत्यवस्थानमहेतुसम इति। अत्र मूर्तेतिस्थाने पूर्वेति पाठो युक्तः, प्रमाणप्रमेययोः इति ज्ञापकज्ञाप्ययोः कारणकार्ययोः साध्यसाधनयोरित्यादेरुपलक्षणम्, परस्परापेक्षया प्रमाणपे-

क्षया प्रमेयस्य प्रमेयापेक्षया प्रमाणस्य, एवं ज्ञापकादेरपि, पूर्वापरसहभावासिद्ध्या प्रमाणे प्रमेयपूर्वभावस्यासिद्ध्या, यतः प्रमितिकरणं प्रमाणं प्रमितिविषयश्च प्रमेयः, पूर्वं प्रमितेरभावे तत्करणरूपस्य प्रमाणस्य तद्विषयरूपस्य प्रमेयस्याप्यभावात् प्रमेयापेक्षया पूर्वकालवृत्तित्वं कथं, यो यदा स्वरूपत एव नास्ति तस्य तदपेक्षैव न सिध्यति, यश्च यदा यत् स्वरूपेणास्तित्वं न, कथं तस्य तत्स्वरूपेण तत्कालवृत्तित्वं, एवमुक्तयुक्त्यैव प्रमेयापेक्षयोत्तरकालवृत्तित्वमपि न प्रमाणस्य, एवं प्रमाणप्रमेययोः प्रमाणप्रमेयभावेन सहकालवृत्तित्वमेव न संभवति, यतस्तुल्यकालयोस्तयोर्विनिगमनाविरहात् प्रमाणत्वं प्रमेयत्वञ्च प्रसज्येत नचैतदिष्टमिति, इयं च दिशा ज्ञाप्यज्ञापकयोः कार्यकारणयोरपि तुल्येति पूर्वापरसहभावासिद्ध्या त्रैकाल्यासिद्ध्या प्रत्यवस्थानमप्रमाणत्वाज्ञापकत्वाहेतुत्वानामापादनमहेतुसमा जातिरिति। अत्र 'त्रैकाल्यासिद्धेर्हेतोरहेतुसमः' (अ० ५। आ० १। सू० १२) इति गौतमसूत्रवृत्तिरित्थम्—त्रैकाल्यं कार्यकालतत्पूर्वापरकालाः तेन हेतोरसिद्धेर्हेतुत्वासिद्धेः, अयमर्थः— दण्डादिकं घटादेर्न पूर्ववर्त्तितया कारणं, तदानीं घटोदरभावात् कस्य कारणं स्यात्, अतएव न घटाद्युत्तरकालवृत्तितयाऽपि, नवा समानकालवर्त्तितया, तुल्यकालवर्त्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः, तथा च कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः, कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसङ्ग्रह इति ॥१६॥ अर्थापत्तिसमां जातिं लक्षयति आभिमानिकार्थापत्तितो वाद्यभिप्रेतपक्षविपरीतोपवर्णनेन प्रत्यवस्थानमर्थापत्तिसम इयि। आभिमानिकार्थापत्तितः वस्तुतोऽर्थापत्तिरनुपपद्यमानेनार्थेनोपपादकार्थकल्पना, साच यत्र नास्ति किन्तु तद्वदवभासत इत्याभिमानिकार्थापत्तिरर्थापत्त्याभासतोऽर्थापत्त्याभासतः, वाद्यभिप्रेतपक्षश्शब्दस्यानित्यत्वं तद्विपरीतं शब्दस्य नित्यत्वं तस्योपवर्णनमत्रैवाभिमानिकार्थापत्तित इत्यस्य सम्बन्धस्तेन प्रत्यवस्थानमर्थापत्त्यासेन प्रतिपक्षसाधनाय प्रत्यवस्थानमिति यावत् तदर्थापत्तिसम इति। अस्याशयो वृत्तावित्थम्—

"अर्थापत्तिर्हि उक्तेनानुक्ताक्षिपति, तथा च शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यन्नित्यं, तथा च दृष्टान्तासिद्धिर्विरोधश्च, कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नमन्यस्माद्धेतोर्नित्य इति बाधः सत्प्रतिपक्षो वा, अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः, विशेषविधेः शेषनिषेधफलकत्वमित्यभिमान इति ॥१७॥ अविशेषसमां जातिं लक्षयति:—एकधर्मोपपत्तेरविशेषे तेन साधर्म्यादविशेषेण प्रत्यवस्थानमविशेषसम

इति। एकधर्मोपपत्तेरविशेषे एकधर्मस्य कृतकत्वादेः शब्दे घटे चोपपत्तेः सद्भावा-द्यदि शब्दघटयोरनित्यत्वेनाविशेषस्तदा, तेन साधर्म्यात् एकधर्मेण सर्वेषां पदार्थानां साधर्म्यात् सत्त्वप्रमेयत्वादिधर्मवत्त्वात् अविशेषेण सर्वेषां सर्वधर्मत्वेन प्रत्यवस्थानमभेदप्रसञ्जनम् अविशेषसमा जातिः, सन्मात्रवृत्तिधर्मेण विशेषापादनमविशेषसमा जातिरिति तल्लक्षणं पर्यवसन्नमिति ॥१८॥ उपपत्तिसमां जातिं लक्षयतिः—प्रकरणोपपत्तिमात्रेण प्रत्यवस्थानमुपपत्तिसम इति। प्रकरणोपपत्तिमात्रेण प्रकरणस्य पक्षप्रतिपक्षसाधकप्रमाणस्योपपत्तिमात्रेण सद्भावमात्रेण प्रत्यवस्थापनमुपपत्तिसमा जातिः। यथा शब्दोऽनित्यः कृतकत्वादितिवादिनोक्ते, यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति तथा मत्पक्षेऽपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात्त्वत् पक्षवदिति प्रत्यवस्थानमुपपत्तिसमा जातिरिति॥१९॥ उपलब्धिसमां जातिं लक्षयति। साध्यसिद्धौ निर्दिष्टस्य प्रमाणस्य भावेऽपि साध्योपलब्ध्या प्रत्यवस्थानमुपलब्धिसम इति। 'प्रमाणस्य भावेऽपि' इत्यस्य स्थाने प्रमाणस्याभावेऽपि इति पाठो युक्तः, साध्यसिद्धौ साध्यसिद्ध्यर्थं वादिनानिर्दिष्टस्योपदर्शितस्य प्रमाणस्याभावेऽपि असत्त्वेऽपि साध्यस्योपलब्ध्योपलम्भेन प्रत्यवस्थानमुपलब्धिसमा जातिः, यथा पर्वतोवह्निमान् धूमादित्यादिकं वह्निसिद्ध्यर्थमनुमानप्रमाणं वादिनोपदर्श्यते न च तद्युक्तं यतस्तस्योक्तानुमानप्रमाणस्याभावेऽपि पर्वतो वह्निमान् आलोकादित्यनुमानेन वह्निरूपसाध्यस्योपलम्भेनावधारणेन प्रत्यवस्थानमुपलब्धिसमा जातिरिति ॥२०॥ अनुपलब्धिसमां जातिं लक्षयति। उपलब्धेरनुपलम्भादभावसिद्ध्या प्रत्यवस्थानमनुपलब्धिसमः, विकल्पपुरस्सरं विषयगतस्वरूपारोपेणाभावसिद्ध्या प्रत्यवस्थानमनुपलब्धिसम इति वेति। 'उपलब्धे' इत्यस्य स्थाने 'अनुपलब्धे' इति पाठो युक्तः। अनुपलब्धे र्यथा-न्यस्यानुपलब्धेरभावसिद्धिरभिमता, तथाऽनुपलब्धेरप्यनुपलम्भादभावसिद्ध्याऽनुपलब्ध्यभावसिद्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिः 'अत्र तदनुपलब्धेरनुपलब्धिसमः' अ० ५ आ० १ सू० २९, इति गौतमसूत्रस्य वृत्तिः स्पष्टप्रतिपत्तये उपदर्श्यते नैयायिकैस्तावच्छब्दानित्यत्वमेवं साध्यते—यदि शब्दो नित्यः स्यादुच्चारणात् प्राक्कुतो नोपलभ्यते, नहि घटाद्यावरणकुड्यादिवच्छब्दस्यावरणमस्ति, तदनुपलब्धेरिति, तत्रैवं जातिवादी प्रत्यवतिष्ठते। यद्यावरणानुपलब्धेरावरणाभावः सिध्यति, तदावरणानुपलब्धेरप्यनुपलम्यादावरणानुपलब्धेरप्यभावः सिध्येत्, तथा—चानुपलब्धिप्रमाणकावरणाभावोनस्यादपीत्वावरणोपपत्तिरेवस्यादिति शब्द

नित्यत्वेनोक्तं बाधकं युक्तम् । नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणात्कथमेवमिति चेत्, इत्थम्, अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षणे स्वयमेव स्वस्मिन्नुपलब्धिरूपेति वाच्यम्, तथा च तयैवानुपलब्ध्याऽनुपलब्धत्वसम्भवात्तदभावासिद्धेः, स्वात्मन्यनुपलब्धिरूपत्वाभावेऽनुपलब्धित्वमेव न स्यात्, अनुपलब्धेरनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्पष्टैव, इत्यं चैवं रूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थ इति । वा अथवा, विकल्पपुरस्सरं विकल्पपूर्वकं अनुपलब्धिरुपलब्ध्यभावो यस्य विषयस्यानुपलब्धिस्तत्स्वरूपोऽतिरिक्तो वा, द्वितीयेऽनवस्था, प्रथमे यदि विषयस्वरूपैवानुपलब्धिस्तदा विषयगतो यो धर्मस्सर्वोऽप्यनुपलब्धः स्यादित्येवं विषयगतस्वरूपारोपेण, अभावसिद्ध्याऽनुपलब्ध्यभावसिद्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिरिति ।।२१।। नित्यसमां जातिं लक्षयति सपक्षसाधर्म्याद्धर्मिणि सपक्षतुल्यधर्मोपपत्तेरभिमतसाध्यसमानधर्मवत्ताप्रसञ्जनेन प्रत्यवस्थानं नित्यसम इति, शब्दोऽनित्यः कृतकत्वाद्घटवदित्यत्र सपक्षस्य घटस्य साधर्म्यात् तद्गतकृतकत्वधर्मवत्त्वाद्धर्मिणि शब्दे सपक्षघटेन सह साधर्म्यसत्त्वादधर्मवत्त्वमपि ततः सर्वस्मिन्नपिपदार्थेऽभिमतानित्यत्वसमानधर्मवत्ताप्रसञ्जनेन घटसाधर्म्यात्सत्त्वादितः वस्त्वनित्यं स्यादित्यापादनेन प्रत्यवस्थान नित्यसमा जातिरित्यर्थः ।।२२।। अनित्यसमां जातिं लक्षयति धर्मिणि साध्यधर्मस्य नित्यानित्यविकल्पनेनानुपपत्त्या प्रत्यवस्थानमनित्यसम इति, धर्मिणि शब्दादौ पक्षे, साध्य धर्मस्य अनित्यत्वस्य नित्यानित्यविकल्पेन अनित्यत्वंवा नित्यंत्वंवेति विकल्पेन, अनुपपत्त्या यदि अनित्यत्वं नित्यं तदा धर्मो धर्मिणमन्तरेण न स्थातुमर्हतीति शब्दोऽपि नित्योऽभ्युपेय इति कथं तस्यानित्यत्वम्, यदि चानित्यत्वमनित्यन्तदा तस्याप्यनित्यत्वमापतितमिति तदप्यनित्यत्व मनित्यत्वमनित्यमित्येवं क्रमेणानवस्था मूलक्षयकरी प्रसज्येतेत्येवमनुपपत्त्या प्रत्यवस्थानमनित्यसमा जातिरिति, गौतमीये दर्शने 'प्रथमसाधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम इति' अनित्यसमलक्षकं सूत्रम अ० ५, आ०१, सू०३२ । नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः अ० ५ आ १, सू० ३५ इति नित्यसमलक्षकं द्वितीयं सूत्रम्, वृत्तिः प्रथमस्येति यदि दृष्टान्तघटसाधर्म्यात्कृतकत्वात्तेन सह तुल्यधर्मतोपपद्यत इत्यतः शब्दे नित्यत्वं साध्यते, तदा सर्वस्यैवानित्यत्वंस्यात्, सत्त्वादिरूपसाधर्म्यसम्भवात्, न चेदर्थान्तरग्रस्तमिति वाच्यम्, सर्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्यात्, परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः, तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण

सर्वस्य साध्यवत्त्वापादनमनित्यसमा साध्यपदादविशेषसमातोऽव्यवच्छेदः,तत्र सर्वाविशेष एवापाद्यते न तु सर्वस्य साध्यवत्त्वम्, यत्तु अनित्यत्वेन समाऽनित्यसमेतिभावप्रधानो निर्देशः यथा चान्वर्थलब्धमेव लक्षणमिति, तन्न, वह्निमान् धूमादित्यादौ महानसाधर्म्यात्सत्त्वात् सर्वस्य वह्निमत्त्वं स्यादित्यस्य जात्यन्तरत्वापत्तेः। आचार्यास्तु साधर्म्यं वैधर्म्यस्याप्युपलक्षकम्, यथा आकाशवैधर्म्यात्कृतकत्वाच्छब्दोनित्यस्तथाऽकाशवैधर्म्यादाकाशभिन्नत्वादित्यतः सर्वमेवानित्यं स्यात्, इत्थं च लक्षणे यत्किञ्चिद्धर्मेणेत्येव वाच्यमित्याहुः। अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्नसर्वस्य साध्यद्विवत्त्वापादनं, किन्त्वात्मादीनामप्यनित्यत्वं स्यादिति तत्र चार्थान्तरमित्यवधेयमिति। द्वितीयस्य वृत्तिस्त्वेवम्-अनित्यस्य भावोऽनित्यत्वं सर्वकालस्वीकारे अनित्ये शब्देनित्यत्वं स्यादित्यापादनं नित्यसमा, अयमाशयः अनित्यत्वस्य नित्यत्वास्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं न स्यात् तस्यापि नित्यत्वापत्तिः, नहि दण्डाभावदशायां दण्डीत्युच्यते, अतोऽनित्यत्वं नित्यमेवास्ती त्यभ्युपगन्तव्यम्, तथा च शब्दस्यापि नित्यत्वापत्तिः, तेन बाधः सत्प्रतिपक्षो वा, तद्देशनाभासा चेयम्, एवमनित्यत्वं यदि नित्यं कथं शब्दस्यानित्यतां कुर्यात्, नहि रक्तं महारजनं पटस्य नीलतां सम्पादयति, अथानित्यम्, तदा तद्भावदशायामनित्यत्वं न स्यादित्यादिकमूह्यम्, एतदनुसारेण लक्षणं कार्यमित्याचार्याः। वयं तु अनित्यस्य भावो धर्मस्तस्य नित्यत्वेनाभ्युपगतस्य नित्यत्वंस्यात्, यथा क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मस्य सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा, न चेत्, तदा साध्याभावादंशतो बाधः, अथ क्षितौ नित्य मेव सकर्तृकत्वमुपेयते, तदा क्षितेर्नित्यत्वं स्यादिति सकर्तृकत्वं विरुद्धम्, तद्देशनाभासा चेयमितिक्रम इति, अतो मूलेऽत्र प्रमादाल्लेखकस्य पूर्वापरीभाववैपरीत्यमिति बोध्यम् ॥२३॥ कार्यसमां जातिं लक्षयति कार्यनानात्वानुमानात् प्रत्यवस्थानं कार्यसम इति, कार्यस्य प्रयत्नकार्यस्य घटादेः कीलकादेश्च यन्नानात्वं तस्यानुमानात् प्रत्यवस्थानं कार्यसमा जातिः,यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादितिवादिनोक्ते प्रतिवादिनः यस्य प्रयत्नानन्तरमात्मलाभः तस्याभूत्वा भवनेन कार्यत्वं यथा घटादेः यस्य तु कीलकादेः प्रयत्नानन्तरमुपलभ्यमानत्वं तस्य प्रयत्नव्यङ्ग्यत्वेन कार्यत्वम्, अनित्यत्वन्तु भूत्वाऽभवनं, न च पूर्वोक्ते दृष्टान्तद्वये प्रयत्नत इति, यच्च कीलकादौ प्रयत्नव्यङ्ग्यत्वपर्यवसितं प्रयत्नानन्तरीयकत्वं न तत्तज्जन्यत्वसाधकं, घटादौ तु यत्प्रयत्नानन्तरीयकत्वमभूत्वा भवनलक्षणं तदप्रसिद्धं न ततोऽनित्यत्वानुमानमित्येवमनुमानात् प्रत्यव-

स्थानं कार्यसमा जातिरिति ।।२४।। इदमत्रावधेयम् सतर्कव्याप्तिपुरस्कारेण प्रवृत्तो वादिनः स्वसमीहितसाध्यसाधनप्रकारे दुरुत्तराभिनिवेशिनो जातिवादिनो दूषणाभासापातरमणीयाश्चतुर्विंशतिजातिप्रकारा विभिन्नलक्षणमात्राकलिता उपदर्शिताः, वादिप्रयुक्तसाधनानि दोषाकलितानि न समीहितसाध्यसिद्धिसमर्थानीत्यावेदनाय प्रत्येकं जातिप्रकारेषु दोषाभासदेशना जातिवादिन इत्यम् साधर्म्यसमायां वैधर्म्यसमायां च 'साधर्म्यमात्रं वैधर्म्यमात्रं जनकमित्यभिमानात् सत्प्रतिपक्षदेशनाभासे चोमे, तेन सत्प्रतिपक्षदोषाद्वादिनः साधनं न साध्यसाधकमित्यभिसन्धिः। उत्कर्षसमायां शब्दोऽनित्यः कृतकत्वादितिवादिसाधनप्रयोगे अनित्यत्वं कृतकत्वं च घटे रूपसहचरितमतः शब्दोऽपि रूपवान् स्यादेवञ्च विवक्षितविपरीतसाधनाद्विशेषविरुद्धहेतुरितिविशेषविरोधदोषदेशना, अपकर्षसमायां शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटसाधर्म्यात् कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्देकृतकत्वस्यानित्यत्वस्य चव्यावृत्तिः स्यादित्यापादनतोऽसिद्धिदेशना बाधदेशना दृष्टान्तगतसाध्यसाधनवैकल्यदेशनाभासादिः। वर्ण्यसमायां वादिहेतोः सपक्षवृत्तित्वानिश्चयादसाधारणदोषदेशना। अवर्ण्यसमायां दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स न पक्षे इति स्वरूपासिद्धिदेशना, तस्य पक्षे स्वीकारेसंदिग्धसाध्यकत्वलक्षणपक्षत्वाभासादाश्रयासिद्धिदेशनापि। विकल्पसमायां धर्माणां गुरुत्वादीनां व्यभिचारदर्शनाद्धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति व्यभिचारदेशनाभासेयंजातिः। साध्यसमायां पक्षादेः पूर्वं सिद्धत्वेऽनुमितिविषयत्वासम्भवादसिद्धत्वे स्वीक्रियमाणे आश्रयासिद्ध्यादिदोषदेशना। प्राप्त्यप्राप्तिसमयोः कारकज्ञापकलक्षणंसाधनं कार्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं तत्साधकं चेत्तदा सत्त्वाविशेषान्नकार्यकारणभावः तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः, यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति साध्याभावबुद्धिमेव किं न जनयेत् अप्राप्तत्वाविशेषादित्येवं प्रतिकूलतर्कदेशनाभासावुक्तजातिप्रकारौ। प्रसङ्गसमायां दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणं वाच्यमित्येवमनवस्थाभासदेशनेयं जातिः, प्रतिदृष्टान्तसमायां यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदाकाशदृष्टान्तबलेन नित्य एव स्यात्, नित्यः किन्न स्यादित्येवं बाधप्रतिरोधदेशनाभासोऽयं जातिप्रकारः, अनुत्पत्तिसमायां घटोरूपवान गन्धादित्यत्र घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिरित्यादिदिशाऽसिद्ध्यादिदेशनाभासा चेयं

जातिः। संशयसमायां हेतुज्ञानेऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयतः सत्प्रतिपक्ष-देशनाभासोऽयं प्रकारः। प्रकरणसमायां शब्दोऽनित्यः कृतकत्वादित्युक्तौ नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधादित्येवं बाधदेशनाभासेयं जातिः। कालसम्बन्ध-खण्डनेनाहेतुतया प्रत्यवस्थानरूपायामहेतुसमायां प्रतिकूलतर्कदेशनाभासोऽयं जाति-प्रकारः। उक्ते नानुक्ताक्षेपरूपायांमर्थापत्तिसमायां शब्दोऽनित्य इत्युक्तेऽर्थादापद्य-तेऽन्यन्नित्य इति दृष्टान्तासिद्धिविरोधबाधसत्प्रतिपक्षादिसर्वदोषदेशनाभासेयं जातिः। सर्वेषामविशेषप्रसङ्गलक्षणायामविशेषसमायां प्रतिकूलतर्कदेशनाभासोऽयं प्रकारः। उपपत्तिसमायां शब्दोऽनित्यः कृतकत्वादितिवादिनोक्ते जातिवादिनः यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति तथा मत्पक्षेऽपि सप्रमाणकः त्वत्पक्षमत्पक्षा-न्यतरत्वात्त्वत्पक्षवदिति बाधप्रतिरोधदेशनाभासेयम्। उपलब्धिसमायां वादिनि-र्दिष्टसाधनाभावेऽपि साध्यस्योपलम्भतः प्रत्यवस्थानरूपायां धूमं विनाऽप्यालोका-दितो वह्निसिद्धेर्न तस्य साधनत्वमिति प्रतिकूल तर्क बाधदेशनाभासोऽयं जातिप्रकारः। अनुपलब्धिसमायां चानुपलब्धेः शब्दस्याभावो नैयायिकाभिमतो न युक्तस्तथासत्य-नुपलब्धेरप्यनुपलम्भादभावसिद्ध्या शब्दोपलब्धिः प्रसज्यत इति प्रतिकूलतर्क-देशनाभासा चेयम्। यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनरूपाया-मनित्यसमायां नित्यत्वेनाभिमतानामात्मादीनामप्यनित्यत्वं स्यादिति प्रतिकूलतर्क-देशनाभासेयं जातिः। नित्यसमायां शब्देऽनित्यत्वस्य नित्यत्वास्वीकारे नित्यत्वाभावदशायां तस्यानित्यत्वं न स्यादतोऽनित्यत्वं नित्यमेवास्तीत्युपेयम् तथा च शब्दस्यापि नित्यत्वापत्तिरिति बाधदेशनाभासः सत्प्रतिपक्षदेशनाभासो वाऽयमिति। सामान्यत उक्ते हेतावनभिमतविशेषनिराकरणेन प्रत्यवस्थान-रूपायां कार्यसमायां, शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं घटादौ प्रयत्नान्तरोपलभ्यमाने कीलकादावपि दृष्टम् तत्र द्वितीयं न तज्जन्यत्व-साधकम् आद्यं त्वसिद्धमित्येवमसिद्धिदेशनाभासोऽयं प्रकार इति॥

क्रमप्राप्तं निग्रहस्थानं लक्षयति—

मूलम्—कथायां विवक्षिततत्त्वाप्रतिपत्तिर्निग्रहः।

प्रतिपक्षे धर्मानुज्ञा स्वपक्षे प्रतिज्ञाहानिः।

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्। तदानीमनुच्चारि-तायामुच्चारणमात्रतः स्वार्थद्वारेण व्याघातो विरोधः। उक्तप्रतिषेधे उक्तार्थापनयनमु-क्तसंन्यासः। अविशेषोक्ते अवयवे प्रतिषिद्धे विशेषणान्तरमवयवान्तरम्। प्रकृता-

दर्थादप्रतिसम्बद्धार्थमर्थान्तरम्। असमानसंकेतवचनं निरर्थकम्। समानसङ्केते-नैकाभिहितं परिषत्प्रतिवादिभ्यामर्थाविज्ञातमविज्ञार्थम्। अविरुद्धानां पौर्वापर्ययोगादेकवाक्यार्थप्रतिपादकत्वं यत्र नास्ति तदपार्थकम्। प्रामाणिकक्रमव्यतिक्रमेण वचनमप्राप्तकालम्। अवयवविहीनं न्यूनम्, केवलप्रतिज्ञाऽप्रतिरिक्तावयवहीनं न्यूनं वा। अन्यत्रानुवादाऽज्ञातार्थस्य वाक्यस्य परिषदैकेनाभिहितस्य दूषकप्रयोजकवतः प्रत्युच्चारणप्रागभावोऽननुभाषणम्। दूष्यविषयज्ञानानुमतिरज्ञानम्। असाधने सदुत्तरस्याप्रतिपत्तिरप्रतिभा। अन्यतरनिग्रहाऽस्फुरणे स्वयमेव कथाविच्छेदो विक्षेपः। स्वपक्षदोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा। असाधने सदुत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणम्। अतन्निग्रहस्थाने तन्निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः। प्रदेशान्तरस्थितसिद्धान्तविरुद्धमपसिद्धान्तः। हेत्वाभासाश्च यथोक्ताः। व्या०— कथायामिति, वादजल्पवितण्डान्यतमरूपायां कथायां विवक्षिततत्त्वस्य वादिनः प्रतिवादिनो वा वक्तुमिष्टस्य पदार्थस्या प्रति पतिरज्ञानं निग्रहः पराजय इत्यर्थः।

तस्य स्थानानि निग्रहस्थानानि यस्मिँस्थितस्य वादिनः प्रतिवादिनो वा पराजयो भवति, उक्तं च भाष्ये, निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानीति, पराजयवस्तूनीत्यस्य पराजयो वसत्यस्मितिपराजयस्थानानीत्यर्थः, निग्रहस्थानानि इत्यस्यैव पर्य्यायान्तरमपराधाधिकरणानीति। निग्रहस्थानस्य द्वाविंशतिधा विभजनरूपं "प्रतिज्ञाहानिः प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च-निग्रहस्थानानि' अ० ५। आ० २। सू० १। इति महर्षिगौतमसूत्रम्, तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टांप्रतिज्ञाहानिं लक्षयति प्रतिपक्षे धर्मानुज्ञा स्वपक्षे प्रतिज्ञाहानिरिति, प्रतिपक्षे प्रतिकूलप्रतिपादिपक्षे भिन्नपक्षहेतुदृष्टान्तसाध्याद्यन्यतमकलिते ये धर्मास्तेषामनुज्ञा स्वीकारोऽभ्युपगम इति यावत्, कुत्रेत्याकांक्षायामाह स्वपक्ष इति स्वमते, स्वपक्षे परपक्षधर्मानुज्ञा प्रतिज्ञाहानिरितिनिष्कर्षः।

इयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात्पञ्चप्रकारा वृत्तावुपदर्शिता, तथाहि-शब्दोऽनित्यःकृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोयमित्युत्तरिते अस्तु तर्हि घट एव पक्ष इति पक्षहानिः। एवं शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते हेतोरनैकान्तिकत्वमिति प्रत्युक्ते, अस्तु कृतकत्वादितिहेतुरिति हेतुहानिः। तथा पर्वतो वह्निमान

धूमादयोगोलकवदित्युक्ते, दृष्टान्तः साधनविकल इति प्रत्युक्ते, अस्तु तर्हि महानसवदिति दृष्टान्तहानिः । पर्वतो वह्निमान् धूमादित्यत्रैव सिद्धसाधनेन प्रत्युक्ते अस्तु तर्हि इन्धनवानिति साध्यहानिः, विशेषणहान्यादिस्त्वन्यहानिः, यथा पर्वतो वह्निमान् नीलधूमादित्युक्ते, असमर्थविशेषणत्वेन प्रत्युक्ते, अस्तु तर्हि धूमादिति हेतुरित्यादि ॥१॥

प्रतिज्ञान्तरं लक्षयति 'प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम्' इति एकेन कथकेन प्रतिज्ञातस्यार्थस्य द्वितीयेन प्रतिषेधे कृते सति, पुनः प्रथमेन तद्दूषणोद्धारार्थं धर्मस्य धर्मान्तरविशिष्टः कल्पो विकल्पः तस्मात् तदर्थनिर्देशः प्रतिज्ञार्थस्य विशेषणान्तरविशिष्टतया कथनं प्रतिज्ञान्तरमित्यर्थः ॥ यथा शब्दो नित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम् ॥२॥

प्रतिज्ञाविरोधं लक्षयति-तदानीमनुच्चारितायामुच्चारणमात्रतः स्वार्थद्वारेण व्याघातो विरोध इति,तदानीं प्रतिज्ञाते अनुच्चारितायां सत्यां, उच्चारणमात्रतः हेतोरुच्चारणमात्रतः, स्वार्थद्वारेण प्रतिज्ञार्थद्वारेण, हेत्वर्थद्वारेण च, व्याघातः प्रतिज्ञार्थे सति हेत्वर्थो न सम्भवति, हेत्वर्थे सति प्रतिज्ञार्थो न सम्भवतीत्येवमसम्भवो, विरोधः, अत्र प्रतिज्ञाहेत्वोर्विरोधः अ० ५-आ० २-सू० ४. इति गौतमसूत्रस्य भाष्यम् ; यत्र प्रतिज्ञा हेतुना विरुध्यते, हेतुश्च प्रतिज्ञया, सोऽत्र प्रतिज्ञाविरोधः, कथम्, यदि गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्योपलब्धिर्नोपपद्यते, यदि रूपादिभ्योऽर्थान्तस्यानुपलब्धिः, गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते, गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते, व्याहन्यते न सम्भवति, अत्र द्रव्यं गुणव्यतिरिक्तमिति प्रतिज्ञा, रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरिति हेतुः, तयोर्विरोध उपपादितः । वृत्तिकारस्तु प्रकारान्तरमत्राबसितम्-तथा च तद्ग्रन्थः—अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे, तथाच कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः । यद्यपि काञ्चनमयः पर्वतो वह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसांकर्यम् , तथाप्युपधेयसंकरेप्युपाधेरसांकर्यान्न दोषः, नचासंकीर्णस्थलाभावः, पर्वतो वह्निमान् धूमात्, यो यो धूमवान् निरग्निरित्युदाहृणे निरग्निश्चायमित्युपनये च तत्सत्त्वात । एवं निगमनेऽपि बोध्यम् ॥३॥

प्रतिज्ञासन्न्यासं लक्षयति—उक्तप्रतिषेधे उक्तार्थापनयनमुक्तसन्न्यास इति, उक्तस्य

स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिहारार्थम् उक्तार्थस्य प्रतिज्ञातार्थस्यापनयनमपलापः, उक्तसन्न्यासः प्रतिज्ञासन्न्यास इत्यर्थः। यथा शब्दोऽनित्यः ऐन्द्रियकत्वात् इत्युक्ते परेण सामान्ये व्यभिचारेण प्रतिषिद्धे सति, क एवमाह शब्दोऽनित्य इत्येवं स्वप्रतिज्ञातार्थस्यापलापो यः क्रियते स प्रतिज्ञासन्न्यास इति ॥६॥

द्वाविंशतिनिग्रहस्थानमध्ये अवयवान्तरं न परिगणितमतोऽवयवान्तरस्याऽविशेषोक्तेः, इत्यादिना मूले लक्षणोपदर्शनं प्रमादत आगतम्, किन्तु तत्स्थाने हेत्वन्तरस्यैव लक्षणाभिधानमुचितमिति तदेवावतार्यते। हेत्वन्तरं लक्षयति—अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरमिति। अयमेव पाठोऽविशेषोक्तेरवयवे प्रतिषिद्धे विशेषणान्तरमवयवान्तरम्, इत्यस्य स्थाने समुचितः। नचावयवान्तरस्य निग्रहस्थानतया वक्तुमुचितस्यापरिगणनं नोचितमिति वाच्यम्, प्रतिज्ञान्तरत्वेनैव तस्य संग्रहात्। तदुक्तं वृत्तिकृता—प्रतिज्ञान्तरलक्षणवृत्तौ—प्रति-ज्ञातार्थस्येत्युपलक्षणं, हेत्वतिरिक्तार्थस्येति तत्त्वम्, तेनोदाहरणान्तरमुपनयान्तरं निगमनान्तरञ्च प्रतिज्ञान्तरत्वेन संगृहीतं भवति, इति। हेत्वन्तरस्य पृथक्तया निग्रहस्थानमध्ये परिगणनात् हेत्वतिरिक्तार्थस्येति उक्तमिति चेत्। अथ प्रकृतम्-अविशेषोक्ते पूर्वोक्ते, हेतौ साधकांशे, प्रतिषिद्धे सति, विशेषमिच्छतः परोक्तदूषणोद्दिधीर्षया विशेषणान्तरमिच्छतः, अर्थाद्विशेषणान्तरं प्रक्षिपतः, अस्य च विशेषमिच्छतः इत्यस्यान्यहेतूकरणमभिलषतः;तथा च पूर्वोक्ते साधकांशे प्रतिषिद्धे सति परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा हेत्वन्तरं तस्य पर्यवसितं तु पूर्वोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्त हेतुतावच्छेदकविशिष्टवचनं हेत्वन्तरमित्यर्थः। यथा शब्दोऽनित्यः बाह्येन्द्रियप्रत्यक्षविषयत्वादित्युक्ते सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते सामान्यवत्त्वेसतीति विशेषणं प्रक्षिप्तं सामान्यवत्वे सति बाह्येन्द्रियप्रत्यक्षत्वादिति हेतुवचनं हेत्वन्तरम्।५॥

अर्थान्तरं लक्षयति—प्रकृतादर्थादप्रतिसम्बन्धार्थमर्थान्तरम्, इति, प्रकृतार्थादिति ल्यप्लोपे पञ्चमी, एवञ्च प्रकृतोपयुक्तमर्थमुपेक्ष्यासम्बद्धार्थाभिधानमर्थान्तरमित्यर्थः। यथा शब्दोऽनित्यः कृतकत्वादित्यभिधाय शब्द आकाशस्य गुण इत्यभिधानम्॥६॥

निरर्थकं लक्षयति—असमानसंकेतवचनं निरर्थकम् इति, केनापि शब्देन सह समानः संकेतो यस्य नास्ति तदसमानसंकेतं यद्वचनन्तन्निरर्थकम्, संकेतपदेन शक्ति-

लक्षणाशास्त्रीयपरिभाषेत्येतत्त्रयस्य ग्रहणम्, वाचकत्वं शक्त्या लक्षणया परिभाषया, तच्च यस्य नास्ति स शब्दोऽवाचकः, तेनावाचकपदप्रयोगो निरर्थकं निग्रहस्थानमिति फलितोऽर्थः। अत्र "वर्णक्रमनिर्देशवन्निरर्थकम् अ० ५। पा० २। सू० इति सूत्रस्य भाष्ये यथाऽनित्यः शब्दः कचटतपः जबगडदशत्वात्, जभञ्घढधषवदित्येवंप्रकारं निरर्थकम्, अभिधानाभिधेयभावानुपपत्तावर्थगतेरभावात्, वर्णा क्रमेण च निर्दिश्यन्त इति, भावितम्, वृत्तौ अस्य प्रमादादितः सम्भव इत्युक्तम्; एतावता यत्किमपि संकेतादिरहितं वचनम् प्रमादादित उक्तम्भवति तदेवास्योदाहरणमवसेयमिति ॥७॥

अविज्ञातार्थं लक्षयति—समानसंकेतेनैकाभिहितं परिषत्प्रतिवादिभ्यामविज्ञातम् अविज्ञातार्थमिति, समानसंकेतेन अन्यानाकलितैकसंकेतेन, स्वमात्रज्ञातसंकेतेनेति यावत्, एकाभिहितम् एकेन वादिनोक्तम् अथ परिषत्प्रतिवादिभ्यां त्रिभिरभिहितमप्यविज्ञातमज्ञातार्थम् अ० ५। आ० २। सू० ६॥ इति गौतमसूत्रतद्भाष्यवार्तिकतात्पर्यादिपर्यालोचनेन चाभिहितमित्यस्य त्रिरभिहितमित्यर्थोऽवसेयः। अथवा मूल एव समानसंकेतेनैकाभिहितमित्यस्य स्थाने समानसंकेतेन त्रिरभिहितम्, इति पाठो ज्ञेयः। त्रिरभिधानं चानवधानादितोऽबोधनिरासाय, एकस्याव्युत्पन्नत्वेऽपि न द्वयोरव्युत्पन्नत्वमित्यावेदनाय परिषत्प्रतिवादिभ्यामिति, अवधिराभ्यां प्रतिवादिपरिषद्भ्यां श्रावणप्रत्यक्षविषयतया शब्दस्वरूपं विज्ञातमेवेत्यत उक्तम् अर्थाविज्ञातमिति, शब्दस्तु न ज्ञायत इति अर्थतोऽविज्ञातम् अर्थाविज्ञातमिति, अविज्ञातार्थकमित्यर्थः॥ अस्य पर्यवसितं वृत्ताविदम्-अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमिति। अत्रैव दृष्टान्तावगतये इदमपि दर्शितम्' एतस्य भेदास्सम्भवः, असाधारणतन्त्रमात्रप्रसिद्धम्, यथा पञ्चस्कन्धादयो बौद्धानाम्, तत्र रूपादयः पञ्चेन्द्रियाणि रूपस्कन्धः; सविकल्पकं संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानस्कन्धः, द्वितीयमतिप्रसक्तयोगमनपेक्षितरूढिकम्, यथा कश्यपतनया धृतिहेतुरयं विनयनतनया न समाननामधेयवान् तत्केतुमत्त्वात्, इत्यादि, तृतीयं श्लिष्टं यथा—श्वेतोधावतीत्यादि। एवमतिद्रुतोच्चरितादिकमपीति भाष्यम्। अत्र नाद्यस्य सम्भवः, उभयतन्त्राभिज्ञयोरेव विचारसम्भवादिति चेत्, सत्यम्, यत्र नैयायिकमीमांसकयोर्विचारे अन्यतरो बौद्धतत्त्वादिपरिभाषया वदति तत्र निग्रह इत्याशयः। तत्रापि चेद्यया कया

चित्परिभाषयोच्यतामिति परः प्रौढ्या वदति न तत्रायस्योपादानमिति, उत्तरयोस्तु न सर्वथैवेति ॥

अपार्थकं लक्षयति-अविरुद्धानां पौर्वापर्ययोगादेकवाक्यार्थप्रतिपादकत्वं यत्र नास्ति तदपार्थकमिति। पौर्वापर्ययोगादित्यस्य स्थाने पौर्वापर्यायोगादितिपाठो युक्तः अविरुद्धानामन्वययोग्यानाम्, पौर्वापर्यस्य कार्यकारणभावस्यायोगादसम्भवात्, शाब्दबोधजनकाकांक्षाज्ञानाद्यभावादिति यावत्, यत्र वाक्ये एकवाक्यार्थप्रतिपादकत्वं, एकवाक्यार्थान्वयबोधजनकत्वं नास्ति तद्वाक्यमपार्थकमित्यर्थः। फलितार्थस्त्वस्य अभिमतवाक्यार्थबोधानुकूलाकांक्षादिशून्यबोधजनकपदत्वमपार्थकत्वमिति, यथा अयोग्यानासन्नानांकाक्षवाक्यमिति ॥

अप्राप्तकालं लक्षयति—प्रामाणिकक्रमव्यतिक्रमेण वचनमप्राप्तकालम् इति। प्रामाणिकैर्वादिप्रतिवादिमध्यस्थैः समयनिबन्धनः कथाव्यवस्थानिबन्धनः, स्वेच्छयैव नियतोऽभ्युपेयत इति तदभ्युपगतसमयबन्धविषयीभूतः क्रमः प्रामाणिकक्रमः स च वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीयाः, अनन्तरं प्रतिवादिनस्तत्रोपालम्भः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणम्, ततो मध्यस्थेन जयपराजयव्यवस्था कर्त्तव्येति, तस्य क्रमस्य व्यतिक्रमेणोल्लंघनेन यद्वचनं तदप्राप्तकालम् एवं प्रतिज्ञाहेत्वादीनां प्रामाणिकाभ्युपगतक्रमोल्लंघनेन सभाक्षोभव्यामोहादिना यद्वचनं तदप्राप्तकालम्। तन्निष्कर्षश्च—समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानमप्राप्तकालमिति। यथा वादिना प्रतिवादिना वा यावद्वक्तव्यं तदन्तरात् एव प्रतिवादिनो वादिनो वा यद्वचनं, यथा वा प्रतिज्ञानन्तरं हेतुर्वक्तव्यः किन्तु हेतुमेव पूर्वमभिधाय ततः प्रतिज्ञावचनमेवमुदाहरणादेर्व्युत्क्रमेणाभिधानमप्राप्तकालमिति ॥

न्यूनं निग्रहस्थानं लक्षयति—अवयवविहीनं न्यूनम्, केवलप्रतिज्ञाव्यतिरिक्तावयवहीनं वा न्यूनम्। अवयवविहीनं स्वशास्त्रसिद्धयत्किञ्चिदवयवशून्यं न्यूनम्, स्वशास्त्रसिद्धत्वोपादानात् उदाहरणोपनयावयवद्वयवादिनो बौद्धस्य प्रतिज्ञाद्यवयवानभिधानेऽपि न क्षतिः, अनभिधानं च सभाक्षोभादिना, तेन नापसिद्धान्तेऽतिव्याप्तिः, वा-अथवा, प्रतिज्ञा त्ववश्यमभिमतैवेत्यभिसन्धानेनोक्तं केवलेति, केवलप्रतिज्ञाव्यतिरिक्तयत्किञ्चिदवयवहीनं न्यूनमित्यर्थः। यथा परार्थानुमाने यत्किञ्चिदवयवानभिधानमिति ॥१६॥

अधिकं पुनरुक्तं च मूले न दृश्यतेऽतस्तद्ग्रन्थस्त्रुटित इति, सूत्रे तु तद्द्वयं निग्रह-

स्थानं तत्रोपदर्शितमिति। तत्र अधिकं प्रतिपादनं-हेतूदाहरणादिकमधिकम् अ० ५। आ० २। सू० १३॥ इति सूत्रम् अत्र हेतूदाहरणाधिकं दूषणायाधिक्यस्याप्युर-लक्षणम्, व्यक्तमदः, यथा धूमादालोकात् महानसवच्चत्वरवदित्यादिकमधिकम् ॥१२॥

पुनरुक्तप्रतिपादके द्वे सूत्रे, तत्राद्यं-शब्दार्थयोः पुनर्वचनं पुनरुक्तम्, अन्यत्रानुवादात् अ० ५। आ० २। सू० १४। इति, द्वितीयम्-अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् अ० ५। आ० २। सू० १५॥ इति। पुनर्वचनमिति लक्षणनिर्देशः, पुनरुक्तमितिलक्ष्यकथनम्, शब्दपुनरुक्तमर्थपुनरुक्तमिति द्वैविध्यप्रतिपादनाय शब्दार्थयोरिति, अनुवादेऽतिव्याप्तिवारणार्थमन्यत्रानुवादादिति। अनुवादस्य व्याख्यारूपत्वेन सप्रयोजनत्वम्, पुनरुक्तस्य निष्प्रयोजनत्वमिति तयोर्भेदः। एवञ्चानुवादान्यत्वे सति पुनर्वचनत्वं पुनरुक्तत्वमिति सामान्यलक्षणम्। विशेषतस्तु समानार्थकसमानानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्, समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तमिति। आद्यं यथा-नित्यः शब्दो नित्यः शब्दः, इति। द्वितीयं यथा, अनित्यः शब्दो निरोधधर्म्मको ध्वनिरिति; पुनरुक्तप्रभेदान्तरप्रतिपादकं द्वितीयं सूत्रम्, पुनरुक्तमित्यनुवर्तते, यस्मिन्नुक्ते योऽर्थ उत्सर्गतः प्रतीयते तस्यार्थस्यार्थादापन्नस्य स्वशब्देन स्ववाचकशब्देन, पुनर्वचनं पुनरभिधानं पुनरुक्तमित्यर्थः यथा वह्निरित्युक्ते उष्ण इति प्रतीयत एव तथापि तद्वाचकस्योष्ण इतिशब्दस्य कथनं वह्निः उष्ण इति, इयं पूर्वपदाक्षिप्तोक्तिः पूर्वपदेन वह्निरित्यनेनाक्षिप्तस्योष्णस्योक्तत्वात्, एवमुष्ण इत्युक्ते वह्निरिति प्रतीयते एव, अथापि तद्वाचकस्य वह्निपदस्य कथनं वह्निरुष्ण इति उत्तरपदाक्षिप्तस्य वह्नेरुक्तत्वादित्युत्तरपदाक्षिप्तोक्तिरिति ॥१३॥

अननुभाषणं लक्षयति अन्यत्रानुवादाज्ज्ञातार्थस्य वाक्यस्यैवैकेन परिषदा दूषकप्रयोजकवतः प्रत्युच्चारणप्रागभावोऽननुभाषणमिति। एकेन परिषदा, अन्यत्रानुवादादनुवादं विना, ज्ञातार्थस्य, वाक्यस्येति त्रिरभिहित इति सूत्रस्थालोचनाद्वादिना त्रिरभिहितस्यापि वाक्यस्येत्यर्थः, दूषकप्रयोजकवतः दूषको, दूषणं तत्प्रयोजकं दूष्यगतं तद्वतो दूष्यस्य सम्पूर्णवाक्यस्यानुभाषणेऽपि तद्वाक्यगतदूष्यभागस्यानुभाषणं दूष्यभागमात्रस्यानुभाषणेऽपि दूषकप्रयोजकवतो दूष्यस्यानुभाषणं, तथा सत्येवायं वादी तत्र दोषोद्भावनं कुर्यात्किन्तु प्रतिवादी जानन्नपि नानुभाषणं कर्तुं प्रभवतीति तस्य प्रत्युच्चारणं प्रागभावोऽननुभाषणमित्यर्थः, त्रिरभिधानेऽपि यत्रानुभाषणविरोधी व्यापारस्तत्राननुभाषणं निग्रहस्थानमिति वृत्तौ।

आचार्यमतमपि तत्रोपदर्शितं ग्रन्थगौरवभयान्नात्रोपदर्शितमिति ॥१४॥

अज्ञानं लक्षयति-दूष्यविषयज्ञानानुमतिरज्ञानमिति, दूष्यविषयज्ञानेति स्थाने दूष्यविषयाज्ञानेति पाठः संभाव्यते, दूष्यो विषयो वाच्यो यस्य वाक्यस्य तद्दूष्यो विषयं तस्य परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि यदज्ञानानुमतिः किं वदति मया बुध्यत एवं नेत्याकारा, सा अज्ञानं नाम निग्रहस्थानमित्यर्थः ॥१५॥

अप्रतिभां लक्षयति-असाधने सदुत्तरस्याप्रतिपत्तिरप्रतिभा इति, असाधने-धस्तुतोऽसाधनस्वरूपे परपक्षे सदुत्तरस्य तत्प्रतिषेधलक्षणस्योत्तरस्योत्तरार्हं परोक्तं जानतोऽपि वादिनोऽप्रतिपत्तिरस्फुरणमप्रतिभानामकं निग्रहस्थानम्, अहो विमलमाकाशमित्येवं खसूचनमप्रस्तुतश्लोकादिपाठश्चास्य गमकः ॥१६॥

विक्षेपं लक्षयति-अन्यतरनिग्रहास्फुरणे कथाविच्छेदो विक्षेप इति, अन्यतरनिग्रहस्य परपक्षप्रतिक्षेपकस्य यस्य कस्यचिन्निग्रहस्यास्फुरणे सति, कथाविच्छेदः असम्भवत्का-लान्तरकत्वेनारोपितं कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदो विक्षेप इत्यर्थः, यथा इदं मे करणीयं विद्यते तस्मिन्नवसिते पश्चात्कथयामीति ॥१७॥

मतानुज्ञां लक्षयति-स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषप्रसङ्गो मतानुज्ञा इति। स्वपक्षे दोषाभ्युपगमात् वादिना स्वमते प्रतिवादिदत्तं दोष-मनुद्धृत्य परपक्षे प्रतिवादिमते दोषप्रसङ्गो दोषापादनं मतानुज्ञेत्यर्थः, अत्र वृत्तावुक्तमुदाहरणं यथा शब्दो नित्यः श्रावणत्वादित्युक्ते ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ शब्दोऽनित्यः कृतकत्वादिति साधिते ध्वनेरपि पक्षसमत्वान्न दोष इत्युक्तौ असिद्धत्वात्तवोक्तेऽपि हेत्वाभासोऽयमित्युक्ते सोऽयं मतानुज्ञया निगृ-हीतः स्यात्, अप्रतिषिद्धमनुमतं भवति इति स्वपक्षे दोषाभ्युपगमादिति ॥१८॥

पर्यनुयोज्योपेक्षणं लक्षयति-असाधने सदुत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति, असाधने निग्रहस्थानान्यतमं प्राप्य स्वपक्षसाधनरहिते वादिनि प्रतिवादिनि वा, सदुत्तराप्रतिपत्तिः निग्रहस्थानं प्राप्तोऽसीत्यादिरूपस्य सदुत्तरस्याप्रतिपत्तिः अनु-द्भावनं पर्यनुयोज्योपेक्षणं पर्यनुयोज्यस्य निग्रहोपपत्त्या चोदनीयस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगलक्षणं निग्रहस्थानमित्यर्थः ॥१९॥

निरनुयोज्यानुयोगं लक्षयति-अनिग्रहस्थाने तन्निग्रहस्थानाभियोगो निरनु-योज्यानुयोग इति, अतन्निग्रहस्थाने यत्र यन्निग्रहस्थानं नास्ति तस्मिन् तन्निग्रहस्थानाभियोगः तन्निग्रहस्थानस्योद्भावनं निरनुयोज्यानुयोगः, वृत्तौ तु-

अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः। एतेनानवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नाव्याप्तिः, सोऽयं चतुर्धा, छलं जातिराभासोऽनवसरग्रहणं च आयासो व्यभिचारादावसिद्ध्याद्युद्भावनम्, अनवसरग्रहणं चाकाल एवोद्भावनम्, यथा त्यक्ष्यसि चेत्प्रतिज्ञाहानिः, विशेषयसि चेद्धेत्वन्तरम्, एवमवसरमतीत्य कथनमपि यथा उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ, एवमनुक्तग्राह्यज्ञानाद्यननुभाषणावसरेऽनुद्भाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमुह्यमिति इति ॥२०॥

अपसिद्धान्तं लक्षयति प्रदेशान्तरस्थितसिद्धान्तविरुद्धम् अपसिद्धान्त इति, स्वीकृतसाङ्ख्याभ्युपगताविर्भाववादस्य वादिनः साङ्ख्यशास्त्रैकदेशस्थितस्य सत्कार्यवादराद्धान्तस्य विरुद्धमाविर्भावाविर्भावाभ्युपगमेऽनवस्थाभयादसत आविर्भावस्याभ्युपगमनमपसिद्धान्त इत्यर्थ इत्यर्थः ॥२१॥

हेत्वाभासानां निग्रहस्थानतयासम्मतानां पूर्वलक्षितहेत्वाभासतो भिन्नत्वे सति लक्षणान्तरं वक्तव्यं स्यात्, न चैवम्, किन्तु येन रूपेण पूर्वमुक्तास्तेनैव रूपेण ते निग्रहस्थानता इति तेषां लक्षणान्तरं न वक्तव्यमित्याह हेत्वाभासाश्च यथोक्ता इति, हेत्वाभासाः पुनर्येन रूपेण पूर्वमुक्तास्तेनैव रूपेण तेषां निग्रहस्थानत्वमिति न लक्षणान्तरमपेक्षितमित्यर्थः ॥२२॥

रचितस्यास्य लक्षणमालाशास्त्रस्यादौ कृतादीश्वरनमस्कारलक्षणमङ्गलान्निर्विघ्नं समाप्तिभावेऽपि आकल्पमुत्तरकालावस्थितयेऽध्ययनाध्यापनाद्यनुवृत्तिभावे च प्रतिबन्धकविघ्नोपशान्तयेऽन्ते ईश्वरनमस्करणलक्षणं मङ्गलं निबध्नाति।

यस्माज्जातं जगत्कार्यं यन्निमित्तं च लीयते।
तस्मै सर्वज्ञरूपाय नमामि परमात्मने ॥ इति।

यस्मादिति यस्मादीश्वरात्, जातमुत्पन्नं, जगत्कार्यं जन्यमात्रम्, एतेनेश्वरे प्रमाणमुपदर्शितम्, जन्यं क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वाद्घटादिवदिति, च पुनः यन्निमित्तं यन्निमित्तं निमित्तकारणं यस्य तद्यन्निमित्तमेतच्च लीयते इत्यनेनान्वेति यन्निमित्तकारणकविनाशप्रतियोगि जगत्कार्यमिति तदर्थः, उत्पत्तिविनाशकारित्वोपदर्शनेन स्थितिकारणत्वमपि तस्य दर्शितं भवति। ततश्च यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व (तै॰ त्ति॰ ३।१) इत्युपनिषद्वाक्यमपि तत्र प्रमाणमिति सूचितम्, तस्मै जगदुत्पत्ति-

स्थितिविनाशकारणाय, एतेन ब्रह्मविष्णुमहेशैतत्त्रितयरूपायेत्यावेदितम्, जगत्कारणत्वं जगदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वमेव भगवतः, जगदुपादानञ्च परमाण्वादि तद्गोचरापरोक्षज्ञानं च जन्यं न संभवति येन प्रतिनियतकारणप्रभवत्वात्प्रतिनियतविषयत्वं भवेत्, नित्यञ्च तद्विनिगमनाविरहात् सर्वविषयकमेवेति सर्वज्ञरूपाय सर्वविषयकज्ञानवते इत्यर्थः, एतेन यः स र्वज्ञः ससर्ववित् यस्य ज्ञानमयं तपः इत्यादिश्रुतिनिरूपितायेत्यस्य सूचनम्, परमात्मने सर्वोत्कृष्टात्मने, उत्कर्षश्चात्रोत्पत्तिस्थित्यादिकर्तृत्वम्। तच्च पूर्वार्द्धेन भाषितमेव। नमामि नमस्करोमि, नमस्कारश्च स्वावधिकोत्कृष्टत्वप्रकारकज्ञानानुकूलो व्यापारः, इतीश्वरनमस्कारलक्षणं मङ्गलमन्ते कृतं ग्रन्थस्यास्याकल्पस्थित्यनुवृत्तय इति।

मालेयं लक्षणानामुदयनकृतिनाचार्यवर्येण दृब्धा
मीमांसान्यायवैशेषिकमतविदुषा सर्वतन्त्रालयेन ॥
बालानां चोपकृत्यै परहृदयविदां तत्त्वबोधप्रवृत्त्यै
निर्वृत्त्यै योगभाजां मुररिपुहृदये चार्पिता कल्पवल्ली ॥१॥

शशिनाथकृता व्याख्या एतस्या अर्थबोधिका
आनन्दनाय विज्ञानां भविता दृष्टिसंगता ॥२॥

इति सव्याख्या लक्षणमाला ॥

## ॥ शास्त्रार्थसंक्षेपः ॥

न्याये तत्त्वानुभूतिः प्रमितिरभिमता संशयाद्या धियोऽन्या
नित्याऽनित्या द्विधा सा मत इह प्रथमाधार ईशः प्रमाणम् ।
तत्प्रामाण्यात्तदुक्तोऽक्षिचरणतनयैर्वेद - उक्तः प्रमाणं
सूत्रं चात्र प्रमाणं मुनिवरगदितं नित्यता वेदगा नो ॥१॥
अन्त्यायास्त्वस्मदादेः करणमनुमतं तच्चतुर्धा फलस्य
चातुर्विध्यात् प्रमाया गुरुसुगतसुताद्यु क्तमेतन्न युक्तम् ।
प्रत्यक्षञ्चेन्द्रियार्थप्रभवमिह तयोस्सन्निकर्षस्तु षोढा
प्रत्यक्षे लौकिकेऽस्मिन् भवति सहकृतिश्चेन्द्रियं तत् प्रमाणम ॥२॥
प्रत्यक्षेऽलौकिकेऽन्यानुमतिविषये न्यायमार्गैकगम्ये
सामान्यज्ञानयोगप्रभवघटनया सन्निकर्षस्त्रिधाऽन्यः ।
सामान्यादाश्रयाणां मतिरिह सुघटा ज्ञानतो गोचराणां
योगोत्थाद्धर्मतस्स्यात् सकलविषयगा युक्तयुञ्जानभेदात् ॥३॥
साध्यव्याप्तस्य हेतोरनुमितिरुदिता ज्ञानतः पक्ष इष्टे
साध्यस्यैषा प्रमा स्यात् फलमिह करणं व्याप्तिबोधः प्रमाणम् ।
प्राचीनैश्चानुमानं मत इह गदितं ज्ञातलिङ्गं न युक्तम्
नष्टादेर्हेतुतो यद्भवति मतिरियं तत्परामर्शबोधात् ।४॥
या संज्ञासंज्ञिसम्बन्धमतिरुपमितिः सा फलं तत्प्रमायाः
शक्ये सादृश्यधीः स्यात् करणमुपमितिर्नैव सादृश्यबुद्धिः ।
अर्थापत्त्यैव सिद्धा परमतकुहना युक्तिरिक्तैव तस्मात्
प्रत्यक्षादेरसाध्योपमितिरुदयनाचार्ययुक्त्याऽतिरिक्ता ॥५॥
साकांक्षासत्तियोग्यार्थकपदघटितं वाक्यमाप्तोक्तमन्यां
प्रत्यक्षादेर्मतिं यां जनयति नियतां वृत्त्यपेक्षं प्रमा सा ।
तात्पर्यज्ञानमत्रान्वयमतिजनने कुत्रचिच्चोपयुक्तं
वाक्यं तस्मात् प्रमाणं करणपदमयं शाब्दबोधः फलन्तु ॥६॥
तद्ग्राह्योऽर्थः प्रमेयो यदि भवति तदा सर्व एव प्रमेयाः

आत्मादिद्वादशानां मुनिवरगदितं यत्प्रमेयत्वमत्र ॥
यन्मिथ्याज्ञायमानं हितगतरतिकृत् द्वेषकृद्द्विष्टगं तत्
मोक्षेक्षुं प्राप्य साक्षान्मितिविषयतया चेष्टमेकं प्रमेयम् ॥७॥
यत्सम्यग्ज्ञायमानं भवजनकमरं हन्ति साक्षाद्द्वितीयं
तन्मेयं द्वादशोक्तं परिगणनमिदं गौतमीये तु सूत्रे ।
ज्ञानाद्याधार आत्मा तनुरुपकृतिकृत् तस्य चेष्टादिमत्तु
तद्युक्तं चेन्द्रियं तत् करणमनुभवेऽध्यक्ष इष्टं वहिस्तत् ॥८॥
अर्थो भोगानुकूलो मितिविषयतया बुद्धिरर्थप्रकाशो
ज्ञानादीनां निमित्तं मन इह करणं चेन्द्रियं त्वान्तरं तत् ॥
यत्नो ज्ञेयः प्रवृत्तिर्हितप्रभृतिगतो दोष इच्छादिरुक्तो
मृत्वा जन्मेति विज्ञैरुदित इह भवे प्रेत्यभावो निसर्गात् ॥९॥
धर्माद्युत्थं फलं तत् सुखमसुखगणं दुःखनत्यन्तनाशो
दुःखादेश्चापवर्गो नहि भवति तदा ज्ञानकृत्यादि जीवे ॥
इत्थं ज्ञेयः प्रमेयोऽक्षिचरणगदितो मुक्तिमार्गोपयुक्तः
षोढा वैशेषिकोक्ता अपि शिशुमतये भावनीयाः प्रमेयाः ॥१०॥
तत्र द्रव्यं गुणस्याधिकरणमथ तत् कर्मवच्चांशतः स्यात्
नित्यः सम्बन्ध इष्टो भवति च समवायस्तयोरेक एव ।
सामान्याधार इष्टोऽगुण इति च गुणः कर्मभिन्नः क्रिया तु
संयोगेऽथानपेक्षं भवति विभजने कारणं द्रव्यभिन्नम् ॥११॥
नित्यत्वे सत्यनेकाधिकरणसमवेतत्ववच्चैकमुक्तम्
सामान्यं तद्विशेषः परमपरमिदं युक्तमापेक्षिकं च ।
नित्यं द्रव्यैकवृत्तिः कणभुगनुमतः स्याद्विशेषोऽन्त्य एव
व्यावृत्तैकस्वभावः स्वत इति च ततो नानवस्थावकाशः ॥१२॥
जातेर्व्यक्तौ गुणादेर्गुणिप्रभृतिषु यो नित्यसम्बन्ध उक्तः
काणादैर्गौतमीयैर्भवति स समवायोऽन्यतन्त्रे तु तत्र ।
भेदाभेदस्वरूपोऽभिमत इतरथा नो विशिष्टावबोधः
तेषां स्यादेक एषो भवति च परतो लाघवं नूनमत्र ॥१३॥
द्रव्यं क्षित्यादिभेदन्नवविधमुदितं काणभक्षे तु तन्त्रे

गन्धाधारा धरा स्यादुदकमिह मतं स्निग्धमुष्णं च तेजः ।
सस्पर्शं रूपशून्यो भवति च पवनो शब्दवत् खं तथैकं
जन्यानां हेतुरेको विभुरथ जगतामाश्रयः कालं इष्टः ॥१४॥
दिक् स्यात् पूर्वापरादिव्यवहृतिजनिकापाविभेदाद्विभिन्ना-
थात्मा पूर्वं निरुक्तः कथितमपि मनो नान्धकारोऽत्र भावः ।
आलोकाभावरूपः स तु विबुधवरैर्वर्णितस्तेन तस्य
द्रव्यत्वं नैव युक्तं कनकमिह भवेत् तेज एवाकरोत्थम् ॥१५॥
घ्राणे स्यात् पार्थिवत्वं रसनमिह जलं तैजसं चक्षुरिष्टं
त्वग् ज्ञेयं वायवीयं गगनमिह मतं श्रोत्रमत्रापरेषाम् ।
नैवाहंकारिकत्वं कथमपि घटते चेन्द्रिये भौतिकेऽस्मिन्
वार्त्ता कर्मेन्द्रियाणां कणभुगनुमता नैव तच्चर्चयालम् ॥१६॥
सूत्रे कण्ठाच्चकारादपि चतुरधिकाविंशतिः स्याद्गुणानां
चक्षुर्मात्रैकगम्यो गुण इति गदितो रूपमेवं रसस्तु ॥
जिह्वामात्रैकगम्यो गुण इति गदितो घ्राणमात्रैकबोध्यो
गन्धो ज्ञेयो गुणस्स्याद्भवति ननु गुणः स्पर्श एवं त्वचस्तु ॥१७॥
एकत्वादेः प्रतीतिर्व्यवहृतिरपि यद्द्रव्यगा सा च संख्या
दीर्घह्रस्वादिबुद्धिर्व्यवहृतिरपि यन्मानमुक्तं तदेव ।
यद्युक्ते द्रव्य एवं पृथगिति च मतिस्तत् पृथक्त्वं निरुक्तं
भेदो भेदाद्यतोऽस्मात् पृथगिति वचनं तत्र नेदं वचस्तु ॥१८॥
संयोगोऽप्राप्तप्राप्तिर्भवति ययुतसिद्धे क्रियातः क्रिया तु
एकस्मिन् वा द्वयोर्वा ननु भवति स संयोगजातिस्तृतीयः ।
स्यात्तन्नाशे विभागो जनक इह भिदा पूर्ववद् भावनीया
दिक्कालोत्थे विभिन्नेऽपरपरमतिके स्तः परत्वापरत्वे ॥१९॥
आह्लादो धर्मजन्यः सुखमिह गदितं दुःखमुक्तं तु पीडा
इच्छा ज्ञेयोऽनुरागोऽसहनमभिमतं द्वेष उत्साहरूपः
यत्नो ज्ञेयो गुरुत्वं प्रथमपतनकृत्स्यन्दनेऽलं द्रवत्वं
चूर्णादेः पिण्डभावे जनक इह मतः स्नेहनामा गुणस्तु ॥२०॥
यस्माद् भिन्नामवस्थां कथमपि जनितां प्राप्य पूर्वामवस्थां

शाख्याद्याप्नोत्यवश्यं क्षितिप्रभृतिगतः स स्थितिस्थापकाख्यः ।
संस्कारो जीववृत्तिस्त्वनुभवजनितो भावनाख्यः स्मृतेस्तु
हेतुर्वेगः क्रियाया जनक इति भिदा संस्कृतेरत्र शास्त्रे ॥२१॥
धर्मः स्वर्गादिहेतुः श्रुतिविहितभवस्तद्विरुद्धस्त्वधर्मो
जन्यो निन्द्यक्रियातो बहुविधनरकाद्युत्थदुःखादिहेतुः ।
श्रोत्रग्राह्यस्तु शब्दो गुण इति भननं लक्षणोक्त्योपदिष्टं
लक्ष्यं कर्मापि लक्ष्मानुगमनमिह यत् तत् सुबोधं विभागात् ॥२२॥
सत्ता सत्सत्प्रतीतेर्भवति हि जनिका सा परा व्यापकत्वात्
कुम्भत्वाद्या तु जातिर्न हि भवति परा न्यूनवृत्त्याऽपरैव ।
द्रव्यत्वाद्या तु जातिस्तदुभयबलतो द्विस्वभावा विशेषा
व्यावृत्तिज्ञानहेतुत्वत इह बहवो नित्यद्रव्याश्रयाश्च ॥२३॥
कुम्भे रूपं कपाले घट इति मतिकृत् नित्य सम्बन्ध एको
लक्ष्मैवं दर्शितं प्राक् मत इह समवायो विभागो न चास्य ।
इत्थं भावा षडेवाभिमननपदवीं यात्यभावोऽपि तत्त्वं
सान्यं वैशेषिकाणां गुरुप्रभृतिमते नातिरिक्तस्त्वभावः ॥२४॥
किस्विदं नवैद्वैवं भवति मतिरियं संशयस्य स्वरूपं
भावाभावौ विरुद्धावपि कलयति यैकत्र सा संशयः स्यात् ।
स्थाणुर्वाऽयं नरो वेति तु मतिरुदिता या चतुःकोटिका सा
भावौ द्वौ वा विरुद्धावपि कलयतु धीस्तत्र कोट्योर्द्वयोः सः ॥२५॥
धर्मिज्ञानाद्विरुद्धस्मृतित इह विनिर्णायकाभावतो यज्
ज्ञानं स्यात् संशयस्तत्र भवति च ततो धर्मिबोधाद्यभावे ।
सूत्रे साधारणादेर्ग्रहणत उदितः संशयो हेतु भेदात्
तत्राप्युक्तप्रकाराकलन इह हृदयं भावनीयं सुधीभिः ॥२६॥
उद्दिश्यार्थं यमिष्टं विदधति कृतिनो यत्नमेतत्तु सूत्रे
पर्यायेणोक्तमस्यानुमतमिह फलतावत्त्वमर्थानुगत्या ।
व्याप्तिर्ग्राह्या तु यत्रान्वयप्रथनपरा साध्यहेत्वोः समन्तात्
साधर्म्यादेष दृष्टान्त उदित इतरो वैपरीत्याद्द्विधैवम् ॥२७॥
योऽर्थः प्रामाणिकत्वादुपगमविषयः सेह सिद्धान्त उक्तः

चातुर्विध्यं तु सूत्रे परिगणिततया तस्य शब्दात् तथार्थात् ।
सिद्धान्तः सर्वतन्त्राभ्युपगमविषयः सर्वतन्त्रः स शब्दात्
एवं चैकैकतन्त्राश्रित इह प्रतितन्त्रस्तु सिद्धान्त उक्तः ॥२८॥
या तन्त्रान्यानुनेयानुगतिकविषया सिद्धिरर्थात् स मेयः
सिद्धान्तो ज्ञाततत्त्वैरधिकरणतया सैकसिद्ध्यान्यसिद्धिः ।
एवं तन्त्रान्तरोक्तो न भवति समये यो निषिद्धः स्वकीये
सिद्धान्तोऽसौ प्रतीतोऽभ्युपगमवचनोऽर्थादिमौ भावनीयौ ॥२९॥
न्याये वाक्ये परार्थानुमितिपटुपरामर्शहेतौप्रविष्टाः
शब्दा येऽवान्तरार्थान्वयमतिजनकास्तेऽक्षपादीयतन्त्रे ।
पञ्चाख्याता निसर्गादवयवपदसङ्केतिताश्च प्रतिज्ञा
हेतुदृष्टान्तयुक्तोपनयनिगमनान्येव नान्ये प्रकाराः ॥३०॥
पक्षे साध्योक्तिरिष्टानुमितिसमधियो हेतुरेषा प्रतिज्ञा
हेतुत्वार्था विभक्तिर्भवति च वचने यत्र तद्धेतुरिष्टः ।
पूर्वं व्याप्तिं प्रदर्श्याथ तदधिगतये या च दृष्टान्तगीस्सा
साधर्म्याच्चेत् तथोदाहरणमथ च वैधर्म्यतस्तद्द्वयं स्यात् ॥३१॥
पक्षे लिङ्गोपसंहार उपनय इतः पक्षधर्मत्वबोधः
पक्षे साध्योपसंहार इह निगमनं स्यात् ततोऽबाधबुद्धिः ।
हेतोः पक्षे सपक्षे भवनमथ विपक्षेऽन्वयाभाव एवं
बाधाभावस्तथात्र प्रकरणसमताशून्यता पञ्चरूपम् ॥३२॥
व्याप्याङ्गीकारतः स्यादनभिमत इह व्यापकस्य प्रसंग-
स्तर्कश्चात्माश्रयादिव्याभिचरिततथाभावशंकानिवृत्त्यै ।
अर्थस्य स्यात् परीक्षोद्भवमवधृतिकं निर्णयो बोधरूपं
स्वस्वस्वार्था कथा स्यात् कथकनियमिता वादिनास्त्रिप्रकाराः ॥३३॥
वादः प्रामाणिकोक्त्येकवचनहृदयोत्था कथा तत्त्वसिद्ध्यै
जल्पः सा स्याज् जिगीषोरुभयमतघटा या भवेत् साधनीया ।
दूष्या चान्योन्यपक्षाभ्युपगतविषया केवलं स्याज्जयार्था
सैव ज्ञेया वितण्डा निजमतविषयस्थापनातोऽप्यपेता ॥३४॥
हेत्वाभासा मतास्तेय इह वचनतो हेतुवद्भासमाना

दुष्टास्ते तत्र दोषा अपि करणतया स्युस्तथैवाभिधेयाः ।
यन्निर्णीतौ न जन्मानुमितिकरणयोरेककस्यात्र दोषे
हेत्वाभासोनिरुक्तस्तदनुगतिबलाद्धेतुरुक्तस्तु दुष्टः ॥३५॥
सूत्रे पञ्चैव दुष्टाः परिगणिततया तेन दोषास्तथैव ।
आद्योऽनैकान्त उक्तो ननु भवति विरोधो द्वितीयस्तृतीयः ।
स्यादेवासिद्धिनामा प्रकरणसमता नामकस्स्याच्चतुर्थो
कालातीतस्तुबाधश्चरम इह मतः पञ्चमो भिन्नरूपः ॥३६॥
अर्थो यो नाभिप्रेतस्तमभिमततया कल्पयित्वा विरोधे—
नैतस्य स्थापनं यच्छलमिति कथितं तत्त्रिधा सूत्र एव ।
यस्मिन् वाक्यान्तरस्य प्रभवति मननं वाक्छलं तन्निरुक्तं
तत् सामान्यच्छलं यद् भवति तु कथिते कल्पना हेतुतादेः ॥३७॥
या मुख्यार्थत्वधीः स्यादुपचरितविधौ सच्छलं तूपचारं
वाद्युक्ते प्रत्यवस्थानमिह निगदिता जातिराभासरूपा ।
साधर्म्याद्यास्समान्ता ननु चतुरधिका विंशतिस्तत्प्रभेदाः
तत्त्वाज्ञानं कथायां कथयति विबुधो निग्रहस्थानमेतत् ॥३८॥
भेदा द्वाविंशतिस्तत्परिगणिततया सूत्र एवाक्षपादैः
तत्त्वज्ञानाद्विमुक्तिः परमफलमितः शास्त्रमात्रे प्रवेशः ।
अध्यात्मं लौकिकं च व्यहरणमतोऽभ्यासतोऽस्योपदिष्टं
तस्मात्संक्षेपतोऽर्थाकलनमिह कृतं भावनीयं सुधीभिः ॥३९॥
श्लोकानां संग्रहोऽयं कृत इह शशिनाथेन भक्त्या गुरूणां
बच्चाझाख्यातनाम्नां समसमयविदां सर्वदान्तःस्थितानाम् ॥
बालानां तत्वमत्यै बुधगणहृदयाह्लादनायापि कर्तु—
स्तत्त्वाभ्यासाय सम्यक् भवतु परिचितो न्यायमार्ग प्रकारः ॥४०॥
इति लक्ष्मणमाझोपदिष्टपदार्थसार्थसंक्षिप्तसारप्रदर्शकः श्लोकसंग्रहः ।

ॐ

## ४. महायानसंस्कृतग्रन्थावली

| | | | सजिल्द | अजिल्द |
|---|---|---|---|---|
| १. | अवदानशतकम्— | १९५८ मूल्यम् | १२.५० | १०.०० |
| २. | ललितविस्तरः— | १९५८ मूल्यम् | १२.५० | १०.०० |
| ३. | दिव्यावदानम्— | १९५९ मूल्यम् | २०.०० | १६.०० |
| ४. | मध्यमकशास्त्रम्— | १९६४ मूल्यम् | १२.५० | १० ०० |
| ५. | महायानसूत्रसंग्रहः— | १९६१ मूल्यम् | २०.०० | १६.०० |
| ६. | अवदानकल्पलता प्रथमो भागः | १९५९ मूल्यम् | १२.५० | १०.०० |
| ७. | ,, ,, द्वितीयो भागः | १९५९ मूल्यम् | १२.५० | १०.०० |
| ८. | सद्धर्मपुण्डरीकसूत्रम्— | १९६० मूल्यम् | १२.५० | १०.०० |
| ९. | बोधिचर्यावतारः— | १९६० मूल्यम् | १२.५० | १०.०० |
| १०. | गण्डव्यूहसूत्रम्— | १९६० मूल्यम् | २०.०० | १६.०० |
| ११. | जातकमाला— | १९५९ मूल्यम् | १२.५० | १०.०० |
| १२. | समाधिराजसूत्रम्— | १९६१ मूल्यम् | १६.०० | १२.०० |
| १३. | शिक्षासमुच्चयः | १९६० मूल्यम् | १२.५० | १०.०० |

### मुद्रणार्थं प्रस्तुताः ग्रन्थाः

१. विष्णुपुराणम्—सामीक्षिकं संस्करणम्
२. महावस्तु—
३. मूलसर्वास्तिवादिनां विनयः—
४. प्रज्ञापारमितासंक्षेपाः द्वितीयो भागः
५. अश्वघोषग्रन्थाः—बुद्धचरितम् सौन्दरनन्दनम् ।

### मुद्रणयन्त्रस्थाः ग्रन्थाः

१. न्यायकुसुमाञ्जलिः—बोधन्यामोदविवेकादिसहितः ।
२. कुमारिलकारिकावली—कुमारिलस्वामिपादकृता ।
३. रत्नकोशमतवादार्थः—
४. सुलोचना—माधवचम्पू
५. तत्वचिन्तामणिः—आलोकदर्पणान्वितः प्रत्यक्षखण्डे द्वितीयो भागः ।
६. न्यायचतुर्ग्रन्थिका—न्यायसूत्र-भाष्य-वार्तिक-तात्पर्य-परिशुद्धिरूपा सटीका
७. शब्दरत्नाकरः—सूत्रत्रयात्मकः प्रथमः खण्डः
८. विवरणपञ्जिका—
९. लङ्कावतारसूत्रम्— मूल्यम्—१२.५०—१०.००
१०. अष्टसाहस्रिका— मूल्यम्—२५.००—२०.००
११. दशभूमिकसूत्रम्— मूल्यम्—१२.५०—१० ००
१२. प्रज्ञापारमितासंक्षेपाः— मूल्यम्—२०.००—१६.००
१३. सुवर्णप्रभाससूत्रम्—
१४. तथागतगुह्यकम्—
१५. सूत्रालंकारः—
१६. महायानस्तोत्रसंग्रहः—